0
3·5
180



# रिलायन्स
# विजेता कौ



...केट से
अख्तर ... निगाह में
... की टीम को "विजयश्री

... पाठक —

... शतप्रतिशत चांस है। ...लाड़ियों की तेज गेंद- ...ष्ठ बल्लेबाजी एवं ...क्षण का कोईसानी ...विश्व में नहीं है। ... मैचों के आंकड़े ...स्टइंडीज के पक्ष ...

...अनुसार पाक- ...तीय स्थान के ...फी संघर्षपूर्ण मैचदेखने ...गा। पाक की टीम ने ... भारत, इंग्लैण्ड में जो ... प्रदर्शन किया है। ...सने अपना वही प्रद-

र्शन विश्वकप में दोहराया होता तो निश्चित रूप से पहला नहीं तो दूसरा स्थान उसे ही मिलेगा।

जावेद का मानना है कि अगर भारत के कपिल, चेतन, मनोज तथा रोजर मध्यम तेज गेंदबाजी से विपक्षी को खुलकर न खेलने दिया तो मनिन्दर, शिवराम कृष्णन, रविशास्त्री, शिवलाल यादव पासा पलटने में सक्षम हैं। आपके अनुसार भारत-पाक में से ही कोई तीसरा स्थान पायेगा। लेकिन इंग्लैंड की टीम भी कुछ करिश्मा दिखाने में सक्षम हो सकती है।

जावेद भारतीय टीम को पूरी तरह संतुलित मान... लेकिन वे सदानन्द, गोप... अरूणलाल को मौका ... पक्षधर हैं। (...

## ...-जोखा

...ध विकेटऔसतसबसे अच्छी बालिंग

**भ**विष्यवाणी करना मुझे पसंद नहीं. लेकिन पाकिस्तान ही रिलायंस के लि... फेवरेट है. कागजों पर इमरान की टी... सबसे मजबूत लग रही है. भारत की टीम भी काफी मजबूत है लेकिन ...

ओ३म्

# तर्कसंग्रहविषयाः ॥

---

क्षेमकरणदास त्रिवेदी
जयपुर (राजपूताना)
पौष कृष्णा [illegible] संवत् १९८९ वि.
ता. 20 दिसंबर १९३२ ई०

[illegible] त्रिवेदी [illegible]
जयपुर – कार्तिक शु० १२ [illegible] ता. ६ नोवेंबर १९३२ ई.

।=)

* श्रीः *

# तर्कसंग्रहः ।

## न्यायबोधिनी-पदकृत्य-

## प्रतिबिम्बटीकाभिः सहितः ।

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥

### न्यायबोधिनी ।

निखिलागमसञ्चारि (१) श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्द्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

चिकीर्षितस्य (२) ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं (३) ग्रन्थतः निबध्नाति (४)–निधायेति ।

---

१ आगमसञ्चारित्वं नाम आगमप्रतिपाद्यत्वम्, प्रतिपाद्यतासम्बन्धेनागमेषु विद्यमानत्वं वा ।

२ कर्तुमिच्छा चिकीर्षा तद्विषयीभूतस्य ग्रन्थस्येत्यर्थः ।

३ ग्रन्थत इति सप्तम्यन्तात्तसिः । ग्रन्थे इत्यर्थः ।

४ प्रतिपाद्यतावच्छेदककोटिप्रवेशानुकूलो व्यापारो निपूर्वकबन्धधातोरर्थः ।

## पदकृत्यम् ।

श्रीगणेशं नमस्कृत्य पार्वतीशङ्करं परम् ।
मया चन्द्रजसिंहेन क्रियते पदकृत्यकम् ॥ १ ॥

विश्वेशं जगत्कर्त्तारं श्रीसाम्बमूर्तिं हृदि-मनसि निधाय-नितरां धारयित्वा गुरुवन्दनं च विधाय-कृत्वा इत्यर्थः । बालेति । अत्राधीतव्याकरणकाव्यकोशोऽनधीतन्यायशास्त्रो बालः । व्यासादावतिव्याप्तिवारणाय-'अनधीतन्याय' इति । स्तनन्धयेऽतिप्रसक्तिवारणाय-अधीतव्याकरण इति ।

सुखेति । सुखेनानायासेन (१) बोधाय-पदार्थतत्त्वज्ञानाय इत्यर्थः । तर्क्यन्ते प्रमितिविषयीक्रियन्त इति तर्काः द्रव्यादि-सप्त पदार्थाः, तेषां संग्रहः संक्षेपेणोद्देशलक्षणपरीक्षा यस्मिन् स ग्रन्थः । नाममात्रेण वस्तुसंकीर्त्तनम् उद्देशः । यथा 'द्रव्यं गुणा' इति । असाधारणधर्मो (२) लक्षणम् । यथा-गन्धवत्त्वं

---

१ श्रोतृप्रवृत्त्यर्थं ग्रन्थादौ विषयप्रयोजनाधिकारिसम्बन्धरूपान् चतुरोऽनुबन्धान् प्रदर्शयन् मूलं विवरणयति पदार्थतत्त्वज्ञानायेति । तथा च पदार्थतत्त्वज्ञानमेव प्रयोजनं सूचितम् । द्रव्यादिसप्तपदार्थाश्च विषयाः । पदार्थसत्त्वावधारणाभीप्सुरधिकारी । सम्बन्धश्च विषयग्रन्थयोः प्रतिपाद्यप्रतिपादकभावः । अनुबन्धत्वञ्च प्रवृत्तिप्रयोजकज्ञानविषयत्वम् । परमस्य शास्त्रस्य मोक्ष एव प्रयोजनम् स चात्यन्तकी दुःखनिवृत्तिः । दुःखानि च षडिन्द्रियाणि । षड्विषयाः, षड्बुद्धयः, शरीरं, सुखं, दुःखञ्चेत्येकविंशतिसंख्याकानि । एतेषां निवृत्तिक्रमश्चेत्थम्, शास्त्रेण तत्त्वज्ञानं भवति तेन च मिथ्याज्ञानस्य नाशः ततो रागद्वेषादिदोषाणां नाशः । ततः प्रवृत्तेरनुत्पादः । ततो जन्मानुत्पत्तिः । ततो दुःखानुत्पाद इति ।

२ असाधारणत्वञ्चान्यूनानतिरिक्तवृत्तित्वम् ।

पृथिव्याः। लक्षितस्य लक्षणं सम्भवति न वा इति विचारः परीक्षा। अत्रोद्देशस्य पदार्थज्ञानं फलम्। लक्षणस्य इतरभेद-ज्ञानम्; परीक्षाया लक्षणे दोषपरिहारः–इति मन्तव्यम्।

(प्रतिवि०) ग्रन्थारम्भे विघ्नविघाताय समाप्तये च मङ्गलाचरणमिति प्राञ्चः। नव्यास्तु विघ्नविघात एव मङ्गलफलं समाप्तिस्तु बुद्धिप्रतिभादिसामग्रीबलादित्याहुः। स्वान्ते विश्वस्येशितारं नितरां ध्यात्वा, गुरोर्नतिं च कृत्वा, अनधीतन्यायशास्त्राणामधीतकाव्यादीनाम्;अनायासेन बोधाय। तर्क्यन्ते प्रमितिविषयीक्रियन्ते ये ते तेषामर्थात्पदार्थानां सङ्क्षेपेण प्रतिपादनं मयाऽन्नंभट्टेन क्रियते इत्यर्थः। बालत्वलक्षणे विशेषणेन विशेष्येण च स्तनन्धयस्य व्यासादेश्च न ग्रहणमिति सूचितम्। प्रायः सर्वत्र मङ्गल-स्याद्येनार्धभागेन विघ्नध्वंसप्रतिपादनम्, अपरेण विषयप्रयोज-नसम्बन्धाधिकारिनिरूपणं क्रियते इति सम्प्रदायसिद्धत्वाद्बा-लानामित्यनेन निरुक्तलक्षणस्य बालस्याधिकारित्वं, सुखबो-धायेत्यनेनानायासतो न्यायपदार्थतत्त्वज्ञानरूपं प्रयोजनं, पदार्थतत्त्वज्ञानग्रन्थयोः प्रतिपाद्यप्रतिपादकत्वरूपसम्बन्धकथनं, पदार्थतत्त्वस्य विषयत्वं च सूचितम्। ग्रन्थाध्ययन-विषयक-प्रवृत्तिप्रयोजकत्वं चानुबन्धत्वम्। निरुक्तानुबन्धज्ञानादिष्टसा-धनत्वकृतिसाध्यत्वज्ञानात्प्रवृत्तिरिति संक्षेपः॥ १॥

न्यायशास्त्रेण कार्यत्रयं सम्पाद्यते। पदार्थानां नामकीर्त-नम्, असाधारणधर्मबोधनं, लक्ष्ये लक्षणसमन्वयश्च। द्रव्यं गुण इत्यादिपदार्थनामकीर्तनम्। गन्धवत्त्वं पृथिव्या लक्षणमि-

त्यसाधारणो धर्मः । पृथिव्यां गन्धसत्त्वाद्गन्धवत्त्वलक्षणस्य लक्ष्यभूतायां पृथिव्यां समन्वयः । एतदेवोद्देशलक्षणपरीक्षा-पदेन नैयायिकवृद्धैरुद्घुष्यते । असाधारणधर्मश्चाव्याप्त्यति-व्याप्त्यसम्भवरूपदोषत्रितयरहित एवं कार्यक्षमः । व्याप्तिर्नाम लक्ष्यमात्रे लक्षणसत्त्वं तदभावोऽव्याप्तिः लक्ष्यैकदेशावृत्ति-त्वमिति यावत् । यथा गोः कृष्णत्वम् । तद्धि लक्ष्यभूतकपिला-दिगोव्यक्तव्यसंग्राहकत्वादव्यापकम् । व्याप्तिमतिक्रान्तोऽति-व्याप्तिः, लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम् । यथा गोः श्रृङ्गित्वम् । तद्धि गोवृत्त्यगोवृत्त्यपीति भवत्यतिव्यापकम् । लक्ष्यमात्रावृत्तित्वमसम्भवः । यथा गोः शुण्डादण्डवत्त्वम् । तद्धि कालत्रयेऽपि गोमात्रेऽसम्भवीति सन्दर्भशुद्धिः ।

पदार्थाः कति, कानि च तेषां नामानि—

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः ।**

(न्यायबो०) अथ पदार्थान् विभजते 'द्रव्य' इति अत्र सप्तग्रहणं 'पदार्थत्वं द्रव्याद्यन्यतमत्वव्याप्यम् (१) इति व्याप्तिलाभाय । ननु "शक्तिपदार्थस्याष्टमस्य विद्यमानत्वात् कथं'सप्तैव' इति । तथाहि–वह्निसंयुक्तेन्धनादौ सत्यपि मणि-संयोगे दाहो न जायते,तच्छून्ये तु जायते । अतो'मणिसमवधाने शक्तिर्नश्यति मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यते'

१ द्रव्यादिसप्तान्यतमत्वं च द्रव्यादिभेदसप्तकाभाववत्त्वम् । प्रत्येकव्यक्ति-प्रसिद्धानां द्रव्यादिभेदानां सप्तानां कुत्राप्यसत्त्वेन तादृशभेदसप्तकत्वाभावस्य सर्वत्र सत्त्वान्न दोष इति भावः ।

इति कल्प्यते। तस्माच्छक्तिरतिरिक्तः पदार्थ इति चेत् न। मणेः प्रतिबन्धकत्वेन (१) तदभावस्य (२) कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्तितद्ध्वंसतत्प्रागभावकल्पनाया अन्याय्यत्वात्। तस्मात् 'सप्तैव' पदार्था इति।

(प्रतिवि०) नव द्रव्याणि,चतुर्विंशतिर्गुणाः,पञ्च कर्माणि सामान्यं(जातिः),विशेषः,समवायः,चतुर्विधोऽभावश्चेति सप्तैव पदार्थाः। अत्र सप्तमस्याभावरूपत्वाद्द्रव्यादीनां षण्णां भावत्वमिति भावाभावभेदाद्द्विविधाः पदार्था इति सूचितम्। सप्तैवेत्येवकारेण शक्तिसादृश्ययोरधिकपदार्थत्वं नेत्युक्तम्। वह्निना दाहे जननीये मणिमन्त्रौषध्यभावस्य हेतुत्वमित्येतावतैव कार्यसिद्धौ मण्यादिसमवधानासमवधानाभ्यामनन्तशक्तितत्प्रागभावादि कल्पनाया अनौचित्यात्,तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वात्सादृश्यस्येति दिक्।

कति द्रव्याणि कानि च तानि—

**तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव।**

(न्यायबो०) द्रव्याणि विभजते–'पृथिवी' इति। ननु "अन्धकारस्य दशमद्रव्यस्य सत्त्वात् कथं 'नवैव' इति। तथा हि 'नीलं तमश्चलति इति प्रतीतेः नीलरूपाश्रयत्वेन क्रियाश्रय-

---

१ प्रतिबन्धकत्वञ्च कार्यकार्यानुकूलशक्त्यन्यतरविघटकत्वमिति।

२ प्रतिबन्धकाभावस्य।

त्वेन च द्रव्यत्वं सिद्धम्। न च 'क्लृप्तद्रव्येष्वेवान्तर्भावात्कुतो दशमद्रव्यत्वमिति वाच्यम् आकाशादिपञ्चकस्य नीरूपत्वाद्वायोरपि नीरूपत्वान्न तेष्वन्तर्भावः; तमसो निर्गन्धत्वान्न पृथिव्यामन्तर्भावः सम्भवति, जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः। "तस्मात्तमसो दशमद्रव्यत्वं सिद्धम्" इति चेन्न। तेजसोऽभावे नैवोपपत्तावतिरिक्तकल्पनायां मानाभावात्। न च 'विनिगमनाविरहात् (१) तेज एवान्धकाराभावस्वरूपम्' इति वाच्यम्, तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शस्य आश्रयबाधात् द्रव्यान्तरकल्पने गौरवात्। तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि (२) नीलरूपप्रतीतिस्तु भ्रान्तिरेव दीपापसरणक्रियाया एव तत्र भानात्।

(पदकृत्य०) तत्रेति। तत्र 'सप्तपदार्थमध्ये इत्यर्थः। द्रव्याणि नवैव इत्यन्वयः। एवं 'तत्र, इति पदं चतुर्विंशतिगुणाःइत्यादिष्वप्यन्वेति। द्रव्यत्वजातिमत्वं समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम्।

(प्रतिवि०) नवैव द्रव्याणि, तानि च पृथ्वी जलं वह्निर्वायुराकाशःसमयो आशा आत्मा मनइत्येवं रूपाणि। द्रव्यत्वजातिमत्त्वं द्रव्यत्वमित्युक्तौ लक्षणलक्ष्यतावच्छेदकयोरैक्येनोद्देश्यतावच्छेदकविधेयतावच्छेदकयोरभेदाच्छाब्दबोधानुमित्योरसिद्धिः। अतो गुणक्रियाश्रयत्वं लक्षणं वाच्यम्। तदप्युत्प-

१ एकपक्षसाधिका युक्तिर्विनिगमना।
२ अन्धकारे।

स्त्रिकाले उत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियं च तिष्ठतीति नियमाद्घटेऽव्याप्तमतः समवायिकारणत्वं द्रव्यत्वमित्यदुष्टं लक्षणम्। नवैवेत्येवकारेण पृथिव्यप्तेजोवाय्वात्मरूपपञ्चैव द्रव्याणि, तमस्सहितानि दश वेति न्यूनाधिकसंख्यानिरासः।

कति गुणाः इति प्रश्ने उत्तरम्—

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः।**

( प्रतिवि० ) सप्तविधं रूपम्, षड्विधो रसः, द्विविधो गन्धः, त्रिविधः, स्पर्शः, एकत्वादिरूपा संख्या, चतुर्विधः, परिमाणः,पृथक्त्वं, संयोगः, विभागः,परत्वम्, अपरत्वम्,गुरुत्वम्, द्रवत्वम्, स्नेहः, शब्दः, बुद्धिः, सुखम्, दुःखम्; इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्मः,त्रिविधः, संस्कार इत्येवं चतुर्विंशतिगुणास्सन्ति। गुणत्वजातिमत्त्वमसमवायिकारणत्वं वा गुणत्वम्।

कियन्ति कर्माणि, कानि च तानीति—

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि। परमपरं चेति द्विविधं सामान्यम्।**

( पद० ) परमपरं चेति। परसामान्यम्, अपरसामान्यमित्यर्थः। परत्वं चाधिकदेशवृत्तित्वम्। अपरत्वं च न्यूनदेशवृत्तित्वम्।

( प्रतिवि० ) ऊर्ध्वदेशसंयोगरूपमुत्क्षेपणम्, अधोदेशसंयोगरूपमपक्षेपणम्, शरीरस्य कौटिल्यरूपमाकुञ्चनम्, विस्ताररूपं प्रसारणम्, पूर्वपूर्वदेशविभागसहितोत्तरोत्तरदेशसंयोगरूपं गमनञ्चेति पञ्चैव कर्माणि। कर्मत्वजातिमत्त्वं कर्मत्वम्। पञ्चैवेत्येवकारेण भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनादीनां न कर्मत्वमिति बोधितम्। तेषां गमने एवान्तर्भावात्।

समानानां भावः सामान्यं (जातिः) परापरभेदाद् द्विविधम्। परसामान्यमपरसामान्यं चेति यावत्। द्रव्यगुणकर्ममात्रवर्तिनी सत्ता परसामान्यं, सर्वसामान्यापेक्षया तस्याधिकदेशवृत्तित्वात्। घटत्वादिसामान्यमपरसामान्यं तेषामल्पदेशवृत्तित्वात्। द्रव्यत्वगुणत्वकर्मत्वादिसामान्यं तु परापरसामान्यम्। सत्तामादायाल्पदेशवृत्तित्वस्य घटत्वादिकमादायाधिकदेशवृत्तित्वस्य च सत्त्वात्। सामान्यलक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम्। घटत्वादिकं हि नित्यमनेकघटसमवेतं चेति लक्षणसमन्वयः।

विशेषस्य कति भेदा इति प्रश्ने उत्तरम्—

## नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता(१)एव।

( प्रतिवि० ) नित्यद्रव्येषु परमाण्वाकाशादिषु वर्तमाना विशेषा अनन्ताः। स्वतो व्यावर्तकत्वं विशेषत्वम्। घटमारभ्य परमाणुपर्यन्तं तत्तदवयवभेदाद्भेदनिरूपणेऽपि परमाणूनां परस्परभेदप्रतिपादनं विशेषेणैव क्रियत इति तत्त्वम्।

---

( १ ) विशेषत्वं नाम स्वतो व्यावृत्तत्वम्। फलं च तस्य निरवयवद्रव्यभेदसिद्धिः।

समवायः कतिविधः इति प्रश्ने उत्तरम्—

**समवायस्त्वेक ( १ ) एव ।**

( प्रतिवि० ) समवायो ह्येक एव न तस्य भेदाः सन्ति । नित्यसम्बन्धत्वं समवायत्वम् । स चावयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोः नित्यद्रव्यविशेषयोश्च सम्बन्धः । स्वीकारश्चास्य नीलो घट इति ज्ञानं विशेष्यविशेषणतासम्बन्धविषयं विशिष्टज्ञानत्वात् कुण्डली देवदत्त इति ज्ञानवदित्यनुमानेनान्यसम्बन्धबाधाद्भवति ।

अभावस्य भेदः स्वरूपं च वक्तव्यमिति प्रश्ने उत्तरम्—

**अभावश्चतुर्विधः (२) प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ।**

( प्रतिवि० ) प्रागभावप्रध्वंसाभावात्यन्ताभावान्योन्याभावभेदादभावश्चतुर्विधः अभावत्वं प्रतियोगिज्ञानाधीनज्ञानवत्त्वं, नञ् पदजन्यप्रतीतिविषयत्वं समवायसामानाधिकरणान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभाववत्त्वं वा । अनादित्वे सति सान्तत्वं प्रागभावत्वम् । अयमभावो हि घटाद्युत्पत्तेः पूर्वमनादिकालाद्वर्तते तदुत्पत्तौ च निवर्तत इति लक्षणसमन्वयः । सादित्वे सत्यनन्तत्वं ध्वंसत्वम् । मुद्गरेण घटनाशे तत्कालमारभ्यानन्तकालं घटाभावस्य सत्त्वाद्भवति लक्षणसमन्वयः ।

---

( १ ) समवायत्वं नाम नित्यत्वे सति सम्बन्धत्वम् ।

( २ ) अभावत्वं नाम प्रतियोगिज्ञानाधीनज्ञानविषयत्वम् । भावत्वं च समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वम् ।

त्रैकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमत्यन्ताभावत्वम्। शशशृङ्गं नासीन्नास्ति न च भविष्यतीति तत्रास्ति त्रैकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावः। अन्योन्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वम्। घटः पटो न, पटश्च घटो नेत्यत्र घटत्वावच्छिन्नप्रतियोगिताकाभावस्य पटे, पटाभावस्यं च तेन सम्बन्धेन घटेऽभावाल्लक्षणसमन्वयः।

पृथिव्याः किं लक्षणं कति च भेदाः—

**गन्धवती पृथ्वी। सा द्विविधा—नित्याऽनित्या च। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा, शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति। विषयो मृत्पाषाणादिः।**

( न्यायबो० ) गन्धवतीति। गन्धवत्त्वं पृथिव्या लक्षणम्॥ लक्ष्या पृथिवी। पृथिवीत्वं लक्ष्यतावच्छेदकम्। यद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः। यो धर्मो यस्या अवच्छेदकः। सा तद्धर्मावच्छिन्ना। तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेल्लक्ष्यता पृथिवीत्वावच्छिन्ना। एवं शीतस्पर्शवत्वादिलक्षणे जलत्वादीनां लक्ष्यतावच्छेदकत्वं बोध्यम्।

(पद०) तदेव हि लक्षणम्, यदव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यम्। यथा गोः सास्नादिमत्वम्। अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम्। अत एव गोर्न कपिलत्वं लक्षणं, कृष्णे-कपि-

लक्ष्यस्याव्याप्तिग्रस्तत्वात्। अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम्। अत एव गोर्न शृङ्गित्वं लक्षणम्, तस्यातिव्याप्तिग्रस्तत्वात्। असम्भवश्च लक्ष्यमात्रावृत्तित्वम्। अत एव गोरेकशफवत्त्वं न लक्षणम्, तस्यासम्भवग्रस्तत्वात्। नित्येति। ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वम्। ध्वंसेऽतिव्याप्तिवारणाय 'ध्वंसभिन्न–' इत्यादि। घटादावतिव्याप्तिवारणाय विशेष्यपदम्। ध्वंसाप्रतियोगित्वं (१) प्रागभावप्रतियोगित्वं वा नित्यत्वम्। (२) यद्भोगायतनं तदेव शरीरम्, चेष्टाश्रयो वा। इन्द्रियमिति। चक्षुरादावतिव्याप्तिवारणाय 'गन्धग्राहकम्' इति। कालादावतिप्रसक्तिवारणाय 'इन्द्रियम्' इति। विषय इति। शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः। शरीरादावतिव्याप्तिनिरासाय भिन्नान्तम्। परमाण्वादावतिप्रसक्तिवारणाय विशेष्यदलम्। कालादिवारणाय 'जन्यत्वे सति' इत्येतदपि बोध्यम्।

---

(१) ध्वंसस्य ध्वंसाभावेन ध्वंसप्रतियोगित्वं ध्वंसे नास्ति इति तस्य अनित्यत्वं न स्यादतः प्रागभावेति। प्रागभावेऽपि प्रागभावप्रतियोगित्वं नास्तीति तत्राप्यनित्यत्वं न स्यादतो ध्वंसप्रागभावान्यतरप्रतियोगित्वमनित्यत्वमिति लक्षणं समीचीनम्।

(२) आत्मनो भोगस्थानमित्यर्थः। सुखदुःखान्यतरसाक्षात्कारावच्छेदकमिति यावत्। सुखादिसाक्षात्कारावच्छेदकत्वं देशकालयोरपि, तत्रापि शरीरत्वव्यवहारप्रसक्तिः स्यादत आह चेष्टाश्रयो वेति। चेष्टा हि हिताहितप्राप्तिपरिहारार्थं क्रियाविशेषः, स च शरीरैकदेशे हस्तादावव्याप्त्यतोऽन्त्यावयवित्वे सतीत्यपि विशेषणं देयम्। अन्त्यावयवित्वञ्च द्रव्यान्तरानारम्भकद्रव्यत्वमित्यर्थः।

( प्रतिबि० ) समवायेन गन्धवत्त्वं पृथिव्या लक्षणम् । काले संयोगेन गन्धसत्त्वान्नातिव्याप्तिः । सेयं पृथिवी ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्वेन ध्वंसप्रागभावान्यतर-प्रतियोगित्वरूपानित्यत्वेन च भेदेन द्विविधा । नित्यत्वरूप-पृथिवीलक्षणे क्रमेण ध्वंसे घटादौ चातिव्याप्तिवारणाय विशेषणविशेष्यदलम् । अनित्यत्वरूपपृथिवीलक्षणे ध्वंसप्राग-भावान्यतरत्वेन प्रवेशस्तु ध्वंसप्रागभावयोर्ध्वंसप्रागभाव-प्रतियोगित्वयोरभावात् कृतः । अतो न प्रत्येकस्य लक्षणत्वम् । परमाणुलक्षणा पृथिवी नित्या । कार्यरूपा अवयववती पृथिव्य-नित्या । अनित्या पृथिव्येव शरीरेन्द्रियविषयभेदाद्भेदत्रितयवती। भोगायतनं शरीरमिति मते सुखदुःखान्यतरसाक्षात्काररूप-भोगस्य दैशिकादिसम्बन्धेन देशकालयोरपि सत्त्वाच्छरीर-व्यवहारः स्यादतश्चेष्टाश्रयत्वं तल्लक्षणम् । भोगसाधनत्वमि-न्द्रियत्वम् । शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनत्वं विषय-त्वम् । शरीरेन्द्रिययोः परमाणौ चाव्याप्तिनिरासाय विशेषण-विशेष्यदलम् । कालेऽतिव्याप्तिवारणाय जन्यत्वमपि । पार्थिवं शरीरं जरायुजाण्डजस्वेदजोद्भिज्जभेदान्मनुष्य-पक्षियूकावृक्षादीनाम् । पार्थिवमिन्द्रियं रूपादिषु पञ्चसु गन्धविषयकसाक्षात्कारजनकत्वाद्घ्राणम् । मृत्तिकापाषाणादिः पार्थिवो विषयः ।

जलस्य किं लक्षणम्, कति च भेदाः—

**शीतस्पर्शवत्य आपः । ता द्विविधाः, नि-**

त्या अनित्याश्च । नित्याः परमाणुरूपाः, अनित्याः कार्यरूपाः, पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ।

( पदकृत्यम् ) शीतेति । तेज आदावतिव्याप्तिवारणाय 'शीत' इति । अकांक्षा ( १ ) वारणाय स्पर्श इति । कालादावति ( २ ) प्रसक्तिवारणाय 'समवायसम्बन्धेन, इति पदं देयम् । इन्द्रियमिति । त्वगादावतिव्याप्तिवारणाय 'रसग्राहकम्, इति । रसनेन्द्रिय–रससन्निकर्षादावतिव्याप्तिनिरासाय इन्द्रियम्, इति '। सरिदित्यादिना तडागहिमकरकादीनां संग्रहः ।

( प्रतिवि० ) समवायेन शीतस्पर्शवत्त्वमपां लक्षणम् । काले तेज आदावाकांक्षायां चातिव्याप्तिनिरासाय क्रमेण लक्षणे समवायशीतस्पर्शपदानि । ता आपो ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वरूपानित्यत्वेन ध्वंसप्रागभावान्यतरप्रतियोगित्वरूपानित्यत्वेन च भेदेन द्विविधाः सन्ति । चेष्टाश्रयोपभोगसाधनोपभोग्यरूपशरीरेन्द्रियविषयभेदात् । कार्यरूपा आपः पुनस्त्रिविधाः । जलीयं शरीरं वरुणलोके प्रसिद्धम् । अत्रापि पृथिव्या उपष्टम्भकत्वम् । जलस्य प्राधान्याज्जलीयत्वम् । रूपादिषु पञ्चसु रसविषयकसाक्षात्कारजनकत्वाद्रसनं जलीयमिन्द्रियम् । चक्षुरादौ रसनेन्द्रियसन्निकर्षे काले चातिव्याप्तिनिरासाय क्रमेण रसग्राहकमिन्द्रियमिति च पदद्वयम् । सरित्समुद्रतडागहिमकरकाः जलीयाः विषयाः ।

---

( १ ) किं शीतं यदस्या आप इत्याकांक्षायाम् ।

( २ ) आदिपदेन दिक्परिग्रहः । दैशिकविशेषणतया देशे कालिकविशेषणतया काले जन्यपदार्थानां वृत्तित्वनियमादिति भावः ।

तेजसः किं लक्षणं के च भेदाः—

उष्णस्पर्शवत्तेजः। तद्द्विविधम्—नित्यमनित्यञ्च। नित्यम्परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनस्त्रिविधम्—शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके। इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति।

विषयश्चतुर्विधः, भौमदिव्यौदर्याकरजभेदात्। भौमं वह्न्यादिकम्। अबिन्धनं(१) दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरौदर्यम्। आकरजं सुवर्णादि।

(पदकृत्यम्) उष्णेति। जलादावतिव्याप्तिवारणाय 'उष्ण' इति। कालादावतिव्याप्तिवारणाय 'समवायसम्बन्धेन' इति पदं देयम्। इन्द्रियमिति। घ्राणादावतिव्याप्तिवारणाय 'रूपग्राहकम्' इति। काला(२)दावतिव्याप्तिनिरासाय 'इन्द्रियमिति। 'भेदात्' इति पदं प्रत्येकमभिसम्बध्यते (३) भौम-

(१) आप इन्धनं प्रकाशकं यस्य तदबिन्धनम्।

(२) कालादीनां जन्यवस्तुमात्रं प्रति कारणत्वे रूपादिग्राहकत्वमप्यस्तीति तत्रातिव्याप्तिः स्यादेवात इन्द्रियमिति।

(३) द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति नियमादिति भावः।

मिति ॥ आदिपदेन खद्योतगततेजःप्रभृतिपरिग्रहः। विद्युदा-दिति। आदिना रविचन्द्रादिपरिग्रहः। भुक्तेति। भुक्तस्यान्ना-देः परिणामो जीर्णता तस्य हेतुरुदर्यम्, इत्यर्थः। सुवर्णेति। आदिना रजतादेः परिग्रहः।

(प्रतिवि०) समवायेनोष्णस्पर्शवत्त्वं तेजसो लक्षणम्। काले जलादौ चातिव्याप्तिवारणाय क्रमेण समवायेनोष्ण इति च पदद्वयं लक्षणे दत्तम्। ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगि-त्वरूपनित्यत्वेन ध्वंसप्रागभावान्यतरप्रतियोगित्वरूपानित्यत्व-भेदेन तेजो द्विविधम्। परमाणुलक्षणं तेजो नित्यम्। कार्यरूपं तेजोऽनित्यम्। कार्यरूपं तेज एव शरीरेन्द्रियविषयभेदात्त्रिवि-धम्। तैजसं शरीरमादित्यलोके प्रसिद्धम्। इन्द्रियं तैजसं रूपादिषु रूपविषयकसाक्षात्कारजनकं चक्षुः। घ्राणादौ काले चातिव्याप्तिवारणाय क्रमेण रूपग्राहकमिन्द्रियमिति च पदद्व-यम्। भौमं दिव्यमौदर्यमाकरजमिति भेदात्तैजसो विषयश्चतु-र्विधः। भूमौ भवं वह्निखद्योतादि। दिवि भवमविन्धनं विद्युद्र-विचन्द्रादि। भुक्तस्यान्नादेः परिपाकहेतुरुदरे भवम्। आकरे खन्यां भवं सुवर्णरजतादि।

वायोः किं लक्षणं के च भेदाः।

रूपरहितस्पर्शवान् वायुः। स द्विविधः-नित्योऽनित्यश्च। नित्यः परमाणुरूपः। अनित्यः कार्यरूपः। पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदा-त्। शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक्

सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसञ्चारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते ।

(न्यायबो०) एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति—रूपरहित इति । रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । सति सप्तम्या विशिष्टार्थकतया रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षणम् । विशेषणांशानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः तत्रापि स्पर्शवत्त्वस्य सत्त्वादत उक्तं रूपरहित इति । विशेष्यानुपादाने आकाशादिपञ्चकेऽतिव्याप्तिः तत्रापि रूपरहितत्वस्य सत्त्वात् अत उक्तं स्पर्श इति । अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम् । यथा गोः शृङ्गित्वं लक्षणं कृतं चेत् लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिः, तत्रापि शृङ्गित्वस्य विद्यमानत्वात् । अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् । लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूतक्वचिल्लक्ष्ये लक्षणासत्त्वमव्याप्तिरित्यर्थः । यथा गोर्नीलरूपवत्त्वं लक्षणं कृतं चेत् लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगवि नीलरूपस्याभावात् अव्याप्तिः । असम्भवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम् । यथा—गोरेकशफवत्त्वम् । गोसामान्ये द्विशफवत्त्वेन एकशफवत्त्वाभावात् । अतिव्याप्त्यव्याप्त्यसम्भवानां निष्कृष्टलक्षणानितु-लक्ष्यता ( १ ) वच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छे-

---

( १ ) यथा शृङ्गित्वरूपे लक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरण्यमपि गोत्वावच्छिन्नप्रतियोगिताको यो महिष्यादौ भेदस्तत्समानाधिकरण्यमपीति लक्षणसंगतिः ।

दकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्, अतिव्याप्तिः। अव्याप्तिस्तु (१) 'लक्ष्यतावच्छेदकसामानाधिकरण्यात्यन्ताभावप्रतियोगित्वम्। असम्भवस्तु (२) लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् इति ।

(पदकृ०) रूपेति घटादिवारणाय विशेषणम्। आकाशादिवारणाय विशेष्यम्। इन्द्रियमिति। चक्षुरादिवारणाय स्पर्शग्राहकमिति । कालादिवारणाय 'इन्द्रियम्' इति। वृक्षेति आदिपदेन जलादीनां परिग्रहः। शरीरेति । महावायुवारणाय विशेषणम् । मन आदिवारणाय विशेष्यम् । धनञ्जय (३) वारणाय संचारी इति। उपाधीति। मुखनासिकाभ्यां निर्गमनप्रवेशात् प्राणः। जलादेरधोनयनादपानः । भुक्तपरिणामाय जाठरानलस्य समुन्नयनात् समानः, अन्नादेरूर्ध्वनयनादुदानः। नाडीमुखेषु विततनाद्व्यानः, इति क्रियारूपोपाधिभेदात्तथा व्यवह्रियत इत्यर्थः।

(प्रतिवि०) रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्। पृथिव्यादावतिव्याप्तिवारणाय रूपरहित इति। आकाशादावतिव्याप्तिवारणाय स्पर्श इति। ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्वेन ध्वंसप्रागभावान्यतरप्रतियोगित्वरूपानित्यत्वेन च वायुर्द्विविधः। परमाणुलक्षणो वायुर्नित्यः। कार्यरूपो वायुरनित्यः। कार्यरूप एव शरीरेन्द्रियविषयभेदात्त्रिविधः।

(१) एवं नीलरूपवत्त्वरूपे लक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरणश्वेतगोनिष्ठात्यन्ताभावप्रतियोगित्वाल्लक्षणसंगतिः।

(२) एवं हि एकशफवत्त्वलक्षणे लक्ष्यतावच्छेदकगोत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिति लक्षणसंगतिः ।

(३) धनञ्जयस्य सर्वशरीरव्याप्तत्वेन सञ्चरणं नास्तीति भावः।

वायवीयं शरीरं वायुलोके पिशाचादीनां प्रसिद्धम्। वायवीयमिन्द्रियं रूपादिषु पञ्चसु स्पर्शविषयकसाक्षात्कारजनकं त्वक्। चक्षुरादौ काले चातिव्याप्तिनिरासाय क्रमेण स्पर्शग्राहकमिन्द्रियमिति च पदद्वयम्। शरीरान्तः सञ्चारित्वे सति वायुत्वं प्राणस्य लक्षणम्। महावायौ मनसि च व्यभिचारवारणाय विशेषणविशेष्योपादानम्। विशेषणे सञ्चारीति पदं धनञ्जयस्य सर्वशरीरवृत्तित्वात्तद्वारणाय। यद्यपि प्राण एक एव, तथापि मुखनासिकाभ्यां निर्गमप्रवेशाभ्यां प्राण इति, जलादेरधोनयनादपान इति, भुक्तस्यान्नादेः पाकाय जाठरस्याग्नेः समुन्नयनात्समान इति, अन्नादेरूर्ध्वनयनादुदान इति रसादेः शिरासु विशेषेणानयनाद्व्यान इति च संज्ञां क्रियारूपोपाधिभेदाल्लभते।

आकाशस्य किं लक्षणम्—

## शब्दगुण ( १ ) कमाकाशम्। तच्चैकं विभु नित्यञ्च।

( न्यायबो० ) आकाशं लक्षयति ( २ ) 'शब्दगुणकम्' इति। अत्र गुणपदं आकाशे शब्द एव विशेषगुण इति द्योतनाय न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य लक्षणत्वात्। तदुक्तम्—

( १ )—भट्टमते शब्दस्य द्रव्यत्वेन तन्निरासार्थं गुणपदमुपात्तमिति बोध्यम्।

( २ ) असाधारणधर्मावबोधधर्मानुकूलव्यापारो लक्षधातोरर्थः।

"रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः।
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः" इति ॥

तच्चैकमिति। अनेकत्वे मानाभावादिति भावः। विभ्विति। सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम्। मूर्तत्वं च क्रियाश्रयत्वम्। पृथिव्यप्तेजोवायुमनांसि मूर्तानि। पृथिव्यप्तेजोवाय्वाकाशपञ्चकं भूतपदवाच्यम्। भूतत्वं नाम बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्।

( पदकृ० ) शब्देति। शब्दो गुणो यस्य तत्तथा। असम्भववारणाय शब्दपदमुन्नेयम्। विभ्विति। सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वम्।

( प्रतिवि० ) समवायेन शब्दवत्त्वमाकाशलक्षणम्। गुणपदोपादानं तु आकाशस्य शब्द एव विशेषगुण इति प्रदर्शनाय। तच्चाकाशस्यानेकत्वे मानाभावादेकं सर्वमूर्तद्रव्यसंयोगि ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगि च। विशेषगुणाश्च रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मवेगभावनाख्याः। पृथिव्यप्तेजोवायुमनांसि मूर्त्तानि। भूतपदाभिधेयं तु पृथिव्यप्तेजोवाय्वाकाशपञ्चकम्। अपकृष्टपरिमाणवत्त्वं मूर्त्तत्वम्। बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतत्वमिति विवेकः।

कालस्य किं लक्षणं के च भेदाः—

**अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च।**

( न्यायबो० ) कालं लक्षयति—अतीतेति । व्यवहारहेतुत्वस्य लक्षणत्वे 'घटः' इति व्यवहारहेतुभूतघटादावतिव्याप्तिस्तद्वारणाय 'अतीतादि' इति विशेषणोपादानम् ।

( पदकृ० ) अतीतेति । अतीत आदिर्यो व्यवहारः अतीतो भविष्यद्वर्तमान ( १ ) इत्यात्मकः तस्यासाधारणो हेतुः काल इत्यर्थः । नन्विदं लक्षणमाकाशेऽतिव्याप्तं व्यवहारस्य शब्दात्मकत्वात्' इति चेत् न, अत्र हेतुपदेन निमित्तहेतोर्विवक्षितत्वात् । न चैवमपि कण्ठताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यं विभुत्वस्यापि ( २ ) निवेशात् ।

( प्रतिवि० ) अतीतः वर्तमानः भविष्यतीत्यादिव्यवहारासाधारणकारणत्वं कालस्य लक्षणम् । घटादावतिव्याप्तिवारणायातीतादिः । कण्ठताल्वाद्यभिघातस्याप्ययमतीत इति शब्दोच्चारणे हेतुत्वमिति चेद्विभुत्वे सत्यतीतादिव्यवहारासाधारणकारणत्वमिति लक्षणमस्तु । कालश्चैकस्सर्वमूर्तिद्रव्यसंयोगी ध्वंसभिन्नो ध्वंसाप्रतियोगी च । कालस्यैक्येऽपि क्रिया, क्रियातो विभागः, विभागात्पूर्वसंयोगनाशः पूर्वसंयोगनाशादुत्तरसंयोगोत्पत्तिरित्युपाधिभेदसिद्धप्रथमद्वितीयतृतीयचतुर्थक्षणान्यादाय क्षणसमुदायैर्दिनादिसिद्धिरिति दिक् ।

---

( १ ) वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वमतीतत्वम् । वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वं भविष्यत्वम् । भूतभविष्यद्भिन्नत्वं वर्तमानत्वम् ।

( २ ) तथा च विभुत्वे सत्यतीतादिव्यवहारासाधारणनिमित्तकारणत्वं कालत्वमिति फलितोऽर्थः ।

अतीतत्वं वर्तमानध्वंसप्रतियोगित्वम्। वर्तमानप्रागभावप्रतियोगित्वं भविष्यत्वम्। वर्तमानध्वंसोपाधिसम्बन्धित्वं वर्तमानत्वम्।

दिशो लक्षणं भेदश्चोच्यतामिति प्रश्ने उत्तरम्—

'प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका नित्या विभ्वी च। १४

(न्यायबो०) दिशो लक्षणमाह–प्राचीति। उदयाचलसंयुक्ता दिक् प्राची। अस्ताचलसंयुक्ता दिक् प्रतीची। मेरोः सन्निहिता दिक् उदीची। मेरोर्व्यवहिता दिग् दक्षिणा।

(पदकृ०)प्राचीति। 'इयं प्राची' 'इयमवाची' इयं 'प्रतीची' 'इयमुदीची' इत्यादि व्यवहारासाधारण(कारणं) दिगित्यर्थः। 'हेतुर्दिक्, इत्युच्यमाने परमाण्वादावतिव्याप्तिः स्यात् 'तद्वारणाय' प्राच्यादिव्यवहारहेतुः' इति। आकाशादिवारणाय, असाधारण, इत्यपि बोध्यम्।

(प्रतिवि०) इयं प्राची, इयमवाची, इयं प्रतीची, इयमुदीचीत्यादिव्यावहारासाधारणकारणं दिक् परमाण्वादाकाशादौ चातिप्रसङ्गवारणाय क्रमेण प्राच्यादिपदमसाधारणपदं च विशेषणम्। दिक् चैका सर्वमूर्तद्रव्यसंयोगवती ध्वंसभिन्ना ध्वंसाप्रतियोगिनी च। तस्या एकत्वेऽप्युदयगिरिसन्निहितत्वास्तगिरिसन्निहितत्वमेरुगिरिसन्निहितत्वमेरुगिरिव्यवहितत्वाद्युपाधिभेदमादाय क्रमेण प्राची प्रतीच्युदीच्यवाच्यादिव्यवहाराणां सिद्धिः।

आत्मनो लक्षणं भेदश्च प्रतिपादयेति प्रश्ने उत्तरम्—

**ज्ञानाधिकरणमात्मा ( १ ) स द्विविधः— परमात्मा ( २ ) जीवात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मा एक एव । जीवः ( ३ ) प्रतिशरीरं भिन्नो विभुर्नित्यश्च ।**

( न्यायबो० ) आत्मानं निरूपयति—ज्ञानाधिकरणमिति । अत्राधिकरणपदं समवायेन ज्ञानाश्रयत्व ( ४ ) लाभार्थम् ।

( पदकृत्यम् ) ज्ञानाधिकरणमिति । भूतलादिवारणाय 'ज्ञान' इति । कालादिवारणाय 'समवायेन' इत्यपि देयम् । ईश्वर इति । समवायसम्बन्धेन नित्यज्ञानवान् ईश्वरः । जीव इति । सुखादिसमवायिकारणं जीवः ।

( प्रतिवि० ) समवायेन ज्ञानाधिकरणत्वमात्मनो लक्षणम् । कालवारणाय समवायपदम् । पृथिव्यादिवारणाय ज्ञानपदम् । स आत्मा परमात्मजीवात्मभेदाद्द्विविधः । तयोरीश्वरः पर-

---

( १ ) मुक्तावल्यायां ज्ञानोत्पादकात्मनः संयोगाभावेन ज्ञानाधिकरणत्वाभावात् मूलोक्तं लक्षणमव्याप्तमतो ज्ञानसमानाधिकरणद्रव्यविभाजकोपाधिमत्त्वमात्मनो लक्षणं बोध्यम् ।

( २ ) जीवत्वं च समवायेन जन्यज्ञानाधिकरणत्वम् ।

( ३ ) सुखादिभोगवैचित्र्यात् प्रतिशरीरं जीवभेदोऽनुमीयते इति भावः ।

( ४ ) अन्यथा कालिकसम्बन्धेन कालेऽपि ज्ञानस्य सत्त्वेनातिव्याप्तिः स्यादिति भावः ।

मात्मा सर्वज्ञ एकः। परमात्मत्वं च समवायेन नित्यज्ञानवत्त्वम्। जीवस्तु शरीरं शरीरं प्रति प्रतिशरीरं भेदेनावस्थितोऽणुर्वे युगपच्छिरसि मे पीडा हस्ते नेति ज्ञानद्वयाभावप्रसङ्गात्। शरीरपरिमाणत्वे कर्मानुसारान्मशकहस्तिशरीरप्राप्तौ सङ्कोचविकासप्रसङ्गाद्विभुर्नित्यश्च। समवायेन जन्यज्ञानवत्त्वं जीवत्वम्।

मनसो लक्षणमुच्यतामिति प्रश्ने उत्तरम्—

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणु (१) रूपं नित्यं च।**

(न्यायबो०) मनो निरूपयति—सुखादीति। उपलब्धिर्नाम साक्षात्कारः। तथा च सुखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वं मनसो लक्षणम्। इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः अतः पूर्वदलम्। विशेष्यानुपादाने आत्मन्यतिव्याप्तिः। आत्मनो ज्ञानादिकं प्रति समवायिकारणत्वात्। अतः इन्द्रियत्वरूपविशेष्योपादानम्।

(पदकृ०) सुखेति। आत्ममनः संयोगादिवारणाय 'इन्द्रियम्' इति। चक्षुरादिवारणाय 'सुखेति'॥

(प्रतिबि०) सुखदुःखादिसाक्षात्कारकारणत्वे सतीन्द्रियत्वं मनसो लक्षणम्। चक्षुरादावात्ममनःसंयोगसाधारणकारणादौ

---

(१) मध्यमपरिमाणत्वेऽनित्यापत्तिरतो विभुत्वं च विभुद्वयसंयोगास्वीकारेणात्मनः संयोगरूपासमवायिकारणस्याभावाद् ज्ञानानुपपत्तिरत आह परमाणुरूपमिति।

चाति व्याप्तिवारणाय विशेषणस्य विशेष्यस्य चोपादानम्। मनश्चात्ममनस्संयोगाज्ज्ञानोत्पत्तेः प्रत्यात्मविज्ञानोत्पत्त्या प्रत्यात्मनि नियमतो वर्तमानमत एवानन्तं मध्यमपरिणामत्वेऽनित्यत्वप्रसंगाद्विभुत्वे विभुद्वयसंयोगानङ्गीकारेणासमवायिकारणस्य त्ममनस्संयोगस्याभावाज्ज्ञानानुत्पत्त्याणुरूपं ध्वंसभिन्नं ध्वंसाप्रतियोगि च। इति द्रव्यग्रन्थः रूपस्य लक्षणं भेदो वृत्तिश्च निरूपयेति प्रश्ने उत्तरम्।

**चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीतहरितरक्तकपिशचित्रभेदात्सप्तविधम्। पृथिव्यप्तेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि।**

( न्यायबो० ) रूपं लक्षयति — चक्षुर्मात्रेति। चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य लक्षणम्। विशेष्यमात्रोपादाने रसादावतिव्याप्तिः। अतः 'चक्षुर्मात्रग्राह्य' इति विशेषणम्। तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः। यो गुणो यदिन्द्रियेण गृह्यते तन्निष्ठा जातिरपि ( १ ) तदिन्द्रियेण गृह्यते, इति नियमात् अतस्तद्वारणाय विशेष्योपादानम्। चक्षुर्मात्रग्राह्यत्वं नाम चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। मात्रपदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः, संख्यादावपि चक्षुर्ग्राह्यत्वविशिष्टगुण (त्व) स्य सत्वात्। अतः तत्रातिव्याप्तिवारणाय मात्रपदम्। संख्यादेश्चक्षुर्भिन्नत्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्र-

( १ ) अपिनाऽभावसंग्रहः।

ग्राह्यत्वं नास्ति । अतीन्द्रियगुरुत्वादावतिव्याप्तिवारणाय चक्षुर्ग्राह्येति । अत्र लक्षणे ग्राह्यत्वं नाम प्रत्यक्षविषयत्वम् । अग्राह्यत्वं नाम तदविषयत्वम् । तथा च चक्षुर्भिन्नेन्द्रियजन्यसाक्षात्काराविषयत्वे सति चक्षुर्जन्यलौकिक- (१) प्रत्यक्षविषयत्वे सति गुणत्वं इति फलितोऽर्थः । ननु 'प्रभाघटसंयोगे रूपलक्षणस्यातिव्याप्तिः तस्य चक्षुर्मात्रग्राह्यगुणत्वात् इति चेत् न । गुणपदस्य विशेषगुणमात्रपरत्वात् । न चैवं विशेषगुणत्वघटितलक्षणे संख्यादावतिव्याप्त्यभावान्मात्रपदवैयर्थ्यमिति वाच्यम् । जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात् । अथवा (२) चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः । संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात् । घटपटसंयोगस्य त्वगिन्द्रियग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात् । अत्र जातिघटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिः तद्वारणाय तदुपादानम् । एवं रसादिलक्षणे विशेषणानुपादाने लक्ष्यभिन्नगुणेऽतिव्याप्तिः । विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः, अतो विशेषणविशेष्ययोरुपादानम् ।

---

(१) ज्ञातं रूपमिति प्रत्यक्षे उपनीतभानविषये ज्ञानेऽतिव्याप्तिवारणाय लौकिकेति तथा च तादृशज्ञानप्रत्यक्षचक्षुःसंयुक्तात्मनःसंयुक्तात्मसमवायरूपसन्निकर्षजन्यस्य षड्विधसन्निकर्षाजन्यत्वान्न दोषः ।

(२) एवमपि परमाणुरूपेऽव्याप्तिरत आह-अथवेति ।

( पदकृत्यम् ) चक्षुर्मात्रेति। रूपत्वादिवारणाय गुणपदम्। रसादिवारणाय 'चक्षुर्ग्राह्य' इति। संख्यादिवारणाय मात्रपदम्। यद्यपि प्रभाभित्तिसंयोगवारणाय गुणपदेन विशेषगुणस्य विवक्षणीयतया तत एव संख्यादिवारणं सम्भवतीति मात्रपदं व्यर्थम्, तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम्। वस्तुतस्तु परमाणुरूपेऽव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वस्य विवक्षणीयतया विशेषपदं न देयम्। द्व्यणुकादिवारणाय गुणपदं तु देयम्। सप्तेति। 'रूपम्' इत्यनुषज्यते।

( प्रतिवि० ) चक्षुर्मात्रग्राह्यत्वे सति गुणत्वं रूपस्य लक्षणम् चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्जन्यलौकिकप्रत्यक्षविषयत्वे सति गुणत्वमिति यावत्। रसादौ संख्यादौ रूपत्वादौ चातिव्याप्तिवारणाय क्रमेण चक्षुर्ग्राह्यमात्रगुणपदानि। यद्यपि गुणपदेनात्र विशेषगुणस्य ग्रहणमत एव न प्रभाभित्तिसंयोगेऽतिव्याप्तिस्तथाच तेनैव संख्याव्यावृत्तिः सिध्यति इति मात्रपदं न देयं। तथापि सांसिद्धिकद्रवत्वनिरासाय तदुपादानम्। वस्तुतस्तु चक्षुर्मात्रग्राह्यजातिमत्त्वस्य रूपलक्षणत्वमत एव परमाणुरूपे नाव्याप्तिरिति विशेषपदं व्यर्थमेव। तच्च रूपं शुक्लो नीलः पीतो रक्तो हरितः कपिशश्चित्रश्चेत्येवंरूपेण सप्तविधम्। चित्रं न रूपान्तरं किन्त्वव्याप्यवृत्तिनानारूपसमुदाय एवेति न वाच्यम्। रूपस्य व्याप्यवृत्तित्वात्। रूपं पृथिव्यां सप्तविधं जले अभास्वरं शुक्लं, तेजसि भास्वरं शुक्लमिति कृत्वा पृथिवीजलतेजस्स्वाश्रितम्।

रसस्य लक्षणं भेदश्च प्रदर्शनीय इति प्रश्नस्योत्तरम्—

**रसनग्राह्यो गुणो रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात्षड्विधः । पृथिवीजलवृत्तिः । तत्र पृथिव्यां षड्विधः । जले मधुर एव ।**

( पदकृ० ) रसनेति । रसत्वादिवारणाय 'गुण' इति । रूपादिवारणाय रसनेति । तत्रेति । पृथिवीजलयोरित्यर्थः । षड् विध इति । अत्र 'रसः' इत्यनुवर्तते ।

( प्रतिवि० ) रसनग्राह्यत्वे सति गुणत्वं रसस्य लक्षणम् । रसनेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वे सति गुणत्वमिति यावत् । रसत्वजातिवारणाय गुणग्रहणम् । गन्धादिवारणाय रसनपदम् । रसश्च मधुर आम्लो लवणः कटुः कषायस्तिक्तश्चेत्येवं भेदेन षड् विधः, पृथिव्यां जले च वर्तते । तत्रापि षड् विधः स पृथिव्यां, जले तु मधुर एवेति प्रतीतिबलात्स्वीक्रियते । जले न कोऽपि रस इति तु न युक्तम् । हरीतकीभक्षणोत्तरं माधुर्यस्य स्पष्टं प्रतीयमानत्वात् ।

गन्धस्य लक्षणं भेदश्च वाच्य इति प्रश्ने उत्तरम्—

**घ्राणग्राह्यो गुणो गन्धः । स द्विविधः । सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ।**

( पदकृ० ) घ्राणेति । गन्धत्वादावतिव्याप्तिवारणाय 'गुण' इति । रूपादावतिव्याप्तिवारणाय 'घ्राणग्राह्य' । इति । पृथिवीति । पृथिवीसम्बन्धसत्त्वे गन्धप्रतीतिसत्त्वं पृथिवीसम्ब-

न्धाभावे गन्धप्रतीत्यभावः, इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव प्रतीतिर्जले बोध्या। ननु देशान्तरस्थकस्तूरीकुसुमसम्बद्धपवनस्यैतद्देशे तत्सम्बन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः। न च वाय्वानीतत्र्यणुकादिसम्बन्धोऽस्त्येव इति वाच्यम्। कस्तूर्यां न्यूनतापत्तेः, कुसुमस्य, च सच्छिद्रत्वापत्तेः इति चेन्न। भोक्त्रदृष्टविशेषेण पूर्ववत्त्र्यणुकान्तराद्युत्पत्तेः। कर्पूरादौ तु तदभावान्न तथात्वमिति।

(प्रतिविं०) घ्राणेन्द्रियग्राह्यत्वे सति गुणत्वं गन्धस्य लक्षणम्। घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वे सति गुणत्वव्याप्यजातिमत्त्वमिति निष्कृष्टोऽर्थः। गन्धत्वजातौ रसादौ चातिव्याप्तिवारणाय गुणपदं घ्राणग्राह्य इति च लक्षणे प्रविष्टम्। गन्धश्च सुगन्धदुर्गन्धभेदाद् द्विविधः। पृथिवीतरद्रव्यावृत्तिः पृथिवीवृत्तिश्च। न च जलं दुर्गन्धीति ज्ञानाज्जलेऽपि गन्ध इति वाच्यम्। पृथिवीसम्बन्धेनैव जले गन्धसम्भवेन जले स्वतो गन्धाभावात्।

स्पर्शलक्षणं तद्भेदान् स च कुत्र वर्तत इति प्रदर्शयति–

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स च त्रिविधः--शीतोष्णानुष्णाशीतभेदात्। पृथिव्यप्तेजोवायुवृत्तिः। तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाशीतः पृथिवीवाय्वोः।**

( न्यायबो० ) स्पर्शं लक्षयति–त्वगिन्द्रियेति। अत्रापि मात्रपदं संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय। अन्यद्विशे-

षणकृत्यं पूर्ववद्बोध्यम्। ग्राह्यत्वपदार्थोऽपि पूर्ववदेव बोध्यः।

(पदकृत्यम्)त्वगिति।.स्पर्शत्वादावतिव्याप्तिवारणाय'गुण' इति। रूपादावतिव्याप्तिवारणाय 'त्वगिन्द्रिय—इति। संख्यादिवारणाय मात्रपदम्। तत्रेति पृथिव्यादिचतुष्टये शीत इति। शीतस्पर्शः। उष्ण इति। उष्णस्पर्शः।

( प्रतिविं० ) त्वग्भिन्नेन्द्रियाग्राह्यत्वे सति गुणत्वम्। त्वग्भिन्नेन्द्रियजन्यलौकिकप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वे च सति गुणत्वव्याप्यजातिमत्त्वमिति यावत्। रसादौ स्पर्शत्वे संयोगादौ चातिव्याप्तिवारणाय क्रमेण त्वगिन्द्रियग्राह्य इति गुण इति त्वग्भिन्नेन्द्रियाग्राह्यत्वे सतीत्यादि लक्षणे विशेषणम्। शीत उष्ण अनुष्णाशीतश्चेति प्रकारभेदात्स्पर्शस्त्रिविधः। जले शीत एव स्पर्शः। तेजस्युष्णस्पर्शः पृथिव्यां वायौ चानुष्णाशीतस्पर्श इति नियमात् पृथिव्यप्तेजोवायुष्वेव स्पर्श इति मन्तव्यम्।

रूपरसगन्धस्पर्शाः कुत्र २ पाकजाः कुत्र २ अपाकजाः इति प्रश्ने उत्तरम्—

**रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च। अन्यत्रा (१) पाकजं नित्यमनित्यं च। नित्यगतं (२) नित्यम्। अनित्य (३) गतमनित्यम्।**

( न्यायबो० ) रूपादीति। एतत्तत्त्वनिर्णयश्चेत्थम्। पाको नाम विजातीयतेजः संयोगः। स च नानाजातीयरूपजनको

विजातीयस्तेजः संयोगः, तदपेक्षया रसजनको विजातीयः। एवं गन्धजनकोऽपि ततो विजातीयः। एवं स्पर्शजनकोऽपि तथा। एवं प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः। तथाहि यथा तृणपुञ्जनिक्षिप्तआम्रादावूष्मलक्षणविजातीयतेजः संयोगात् पूर्वं हरितरूपनाशेन रूपान्तरस्य पीतादेरुत्पत्तिः न तु रसादेरुत्पत्तिः। पूर्वरसस्यैवाम्लस्यानुभवात्। क्वचित्पूर्वहरितरूपस्य सत्वेऽपि रसपरावृत्तिर्दृश्यते, विजातीयतेजः संयोगरूपविपाकवशात्पूर्वतनाम्लरसनाशेन मधुररसस्यानुभवात्। तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्य्यः। एवं स्पर्शजनकोऽपि विलक्षण एव, रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशेऽपि विजातीयपाकवशात्सुरभिगन्धोपलब्धेः। एवं स्पर्शजनकोऽपि पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात्। तस्माद्रूपादिजनका विजातीया एव पाकाः। अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः। यथा गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणारम्भकपरमाणुषु विजातीयतेजः संयोगात् पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजः संयोगा जायन्ते, तदुत्तरं तैरेव तादृशरूपरसादय उत्पद्यन्ते। तादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भ इति। एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतारम्भ इति दिक्।

(प्रतिबिं०) रूपरसगन्धस्पर्शाः विलक्षणतेजस्संयोगात्पृथि-

व्यां जायन्त अत एवानित्याः । आमपाकनिक्षिप्ते घटे समवायिकारणभूतपरमाणुष्वसमवायिकारणभूतविलक्षणतेजस्संयोगात्। क्रिया ततो विभागस्ततः पूर्वरूपनाशे द्व्यणुकादिक्रमेण रक्तरूपमुत्पद्यते । अयं क्रमः परमाणुपाकवादे । घटपाकवादिमते पूर्वघटनाशं विनैवावयविन्यवयवेषु च सहैव रूपान्तरमुत्पद्यते। उभयथापि पार्थिवपरमाणुगतं रूपमनित्यम् । एवं पार्थिवपरमाणुगता रसगन्धस्पर्शा अनित्याः । रूपरसगन्धस्पर्शजनकतेजस्संयोगवैलक्षण्येनैव क्वचिदाम्रादौ रूपरसगन्धस्पर्शानां सर्वेषां क्वचित् त्रयाणां क्वचिदुभयोः क्वचिदेकस्यैव परावृत्तिः। अतो रूपादिचतुष्टयं पृथिव्यामनित्यम् । जलतेजोवायुषु तु रूपादिचतुष्टयं नित्यमनित्यं चेत्युभयविधम् । जलादिपरमाणुनिष्ठं रूपादिचतुष्टयं नित्यम् ।द्व्यणुकादिनिष्ठमनित्यम्। यद्यपि जले न गन्धः, तेजसि न रसगन्धौ, वायौ न रूपरसगन्धास्तथापि यथासम्भवं रूपादिसत्ता सर्वत्र बोध्या । प्रत्यक्षप्रयोजकधर्मरूपेणोद्भूतसहकृतानां रूपादीनां प्रत्यक्षं भवति ।प्रत्यक्षाभावप्रयोजकधर्मरूपानुद्भूतसहकारे तु न तेषां प्रत्यक्षमित्यवधेयम्।

संख्यायाः किं लक्षणं कुत्र च वर्तत इति प्रश्ने उत्तरम्—

**एकत्वादिव्यवहारहेतुः संख्या । नवद्रव्यवृत्तिः । एकत्वादिपरार्धपर्यन्ता । एकत्वं नित्यमनित्यं च । नित्यगतं ( १ ) नित्यम् । अनित्य ( २ ) गत-**

---

( १ ) भूतलादिचतुर्णां परमाणवः आकाशादि पञ्च च नित्यास्तेषु गतमेकत्वमपि नित्यमिति भावः ।

( २ ) अनित्यं च यावद्घटपटादिकार्यजातस्य ।

मनित्यम् । द्वित्वादिकं तु सर्वत्रानित्य (१) मेव ।

( पदकृ० ) एकत्वादीति । 'एकत्वम्' इत्यादिर्यो व्यवहारः, 'अयमेकः इमौ द्वौ एते बहवः' इत्याद्यात्मकः । तस्य हेतुः संख्या इत्यर्थः । पटादिवारणाय 'एकत्वादि, इति । कालादिवारणाय साधारणेत्यपि देयम् । ननु संख्याया अवधिरस्ति नवेत्यत आह-एकत्वादीति । तथा च--

'एकं दशं शतं चैव सहस्रमयुतं तथा ।
लक्षं च नियुतं चैव कोटिरर्बुदमेव च ॥
बृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः ।
अन्त्यं मध्यं परार्धं च दश वृद्ध्या यथाक्रमम् ॥

इति महदुक्तेः परार्धपर्यन्तैव संख्या इति भावः ।

( प्रतिवि० ) अयमेक इमो द्वाविति व्यवहारासाधारणकारणत्वं संख्यालक्षणम् । संख्या हि पृथिव्येकेत्यादिव्यवहारदर्शनात् पृथिव्यादिनवद्रव्यवर्तिनी । एकत्वमारभ्य परार्धं यावत् संख्येत्युच्यते । एक त्वं नित्यानित्यभेदेन द्विविधम् । परमाणुगतमेकत्वं नित्यम् । द्व्यणुकादिनिष्ठमनित्यम् । द्वित्वादिकं त्वय-

---

( १ ) अपेक्षाबुद्धिजन्यत्वादिति भावः । समवायेन द्वित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेनापेक्षाबुद्धेर्निमित्तकारणत्वम् असमवायिकारणं च समवायिकारणगतमेकत्वम् । अपेक्षाबुद्धित्वञ्चानेकैकत्वावगाहित्वम् ( अयमेकः २ इमौ द्वौ इति रूपम्) तन्नाशादेव द्वित्वादीनां नाशः । न च समवायिकारणनाशादसमवायिकारणनाशाद्वा कार्यं नाश इति नियमविरोधः,न तु समवायिकारणासमवायिकारणान्यतरनाशादेव कार्यनाश इति नियमः किन्तु समवायिकारणासमवायिकारणान्यतरनाशे कार्य्यनाशो भवत्येवेति नियमः-तथा च कुत्रचित् द्वित्वादिस्थलेऽपेक्षाबुद्धिरूपनिमित्तकारणनाशादपि द्वित्वादिरूपकार्यनाशेन नियमविरोध इति भावः ।

मेकोऽयमेक इतीमौ द्वावित्यपेक्षाबुद्धिजन्यत्वादपेक्षाबुद्धिनाशे तन्नाशाभ्युपगमात्सर्वत्रानित्यमेव । अपेक्षाबुद्धिरूपनिमित्तकारणनाशात् द्वित्वादिकार्यनाशेऽपि समवायिकारणनाशादसमवायिकारणनाशाद्वा कार्यनाश इति नियमविरोधो न । समवायिकारणासमवायिकारणान्यतरनाशे कार्यनाशो भवत्येवेति नियमस्वीकारात् ।

परिमाणस्य किं लक्षणं के च भेदा इति प्रश्ने उत्तरम्—

**मानव्यवहारासाधारणकारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम्—अणुमहद्दीर्घंह्रस्वंचेति ।**

( पदकृ० ) मानेति । मानं परमितिः, तस्या यो व्यवहारः 'इदमणु' इदं 'महत्' इत्याद्यात्मकः तस्य कारणं परिमाणम् इत्यर्थः । दण्डादिवारणाय 'मान' इति । कालादिवारणाय 'असाधारणम्, इति । शब्दत्ववारणाय 'कारणम्' ( १ ) इति । नवद्रव्येति । चतुर्विधमपि परममध्यमभेदेन द्विविधम् । तत्र परमाणुत्वह्रस्वत्वे च परमाणुमनसोः । मध्यमाणुह्रस्वत्वे द्व्यणुके । परममहत्त्वदीर्घत्वे गगनादौ । मध्यमह्रस्वदीर्घत्वे घटादौ । 'एतन्मौक्तिकादेतन्मौक्तिकमणु, इति व्यवहारस्य निकृष्टमहत्वादूगौणत्वं बोध्यम् । एवमेव 'कतनादूव्यजनं ह्रस्वम्' इत्यत्रापि निकृष्टदीर्घत्वादूगौणत्वम् ।

(प्रतिवि०) मीयते ऽनेनेति मानं परिमितिस्तस्या यो व्यवहारस्तदसाधारणकारणमित्यर्थः । हस्तरक्तिकासेटकादिपरि-

( १ ) मानव्यहारेति शब्दे शब्दत्वस्याप्यसाधारणधर्मत्वात्कारणेति पदमित्यर्थः ।

मितोऽयमिति व्यवहारासाधारणकारणत्वं परिमाणलक्षणम्। दण्डकालशब्दत्वादावतिव्याप्तिवारणाय क्रमेण मानासाधारणकारणपदानि। एकहस्तपरिमिता भूमिः, सेटकपरिमितं जलमित्यादिव्यवहारदर्शनात्परिमाणं पृथिव्यादिनवद्रव्यवर्ति। अणुत्वमहत्वदीर्घत्वह्रस्वत्वभेदात्परिमाणस्य चत्वारो भेदाः। चत्वार्यपि परिमाणानि परममध्यमभेदाद्द्विविधानि। अणुमनसोः परमाणुत्वह्रस्वत्वे। द्व्यणुके मध्यमाणुत्वह्रस्वत्वे। आत्मनि गगनादौ च परममहत्त्वदीर्घत्वे। पटादौ मध्यमह्रस्वत्वदीर्घत्वे।

पृथक्त्वस्य किं लक्षणम्—

**पृथग्व्यवहारासाधारणकारणंपृथक्त्वम्। नवद्र० वृत्ति।**

( पदकृ० ) पृथगिति। 'अयमस्मात्पृथक्' इति यो व्यवहारः तस्य कारणं पृथक्त्वम् इत्यर्थः। दण्डादिवारणाय 'पृथक्' इत्यादि। कालत्वादिवारणाय असाधारणं—इति। पृथग्व्यवहारवारणाय 'कारणम्' इति।

( प्रतिवि० ) घटः पटात् पृथगित्यादिव्यवहारासाधारणकारणत्वं पृथक्त्वलक्षणम्। घटादौ कालादौ पृथग्व्यवहारत्वे चातिव्याप्तिवारणाय लक्षणे क्रमेण पृथगसाधारणकारणपदानि। पृथिवी जलात्पृथगित्यादिव्यवहारदर्शनात् पृथक्त्वं पृथिव्यादिनवद्रव्यवृत्ति।

संयोगस्य किं लक्षणमिति प्रश्ने उत्तरम्—

**संयुक्तव्यवहारहेतुः संयोगः। नवद्रव्यवृत्तिः।**

( पदकृ० ) संयुक्तेति । 'इमौ संयुक्तौ, इति यो व्यवहार-स्तस्य हेतुः संयोग इत्यर्थः । दण्डादिवारणाय संयुक्तव्यव-हार' इति । कालादिवारणाय 'असाधारण' इत्यपि देयम् । संयुक्तव्यवहारत्वेऽतिव्याप्तिवारणाय 'हेतुः' (१) इति । उप-दर्शितलक्षणचतुष्टये असाधारणपदं देयम् । क्वचित्पुस्तके परि-माणपृथक्त्वलक्षणे ईश्वरेच्छादिवारणाय'असाधारणपदं दृश्यते' 'तत्त्वाधुनिकैर्न्यस्तम्, इति बोध्यम् ।

( प्रतिवि० ) 'इमौ संयुक्ताविति व्यवहारासाधारणकारण-त्वं संयोगलक्षणम् । दण्डादौ कालादौ संयुक्तव्यवहारत्वे चाति-व्याप्तिवारणाय लक्षणे क्रमेण संयुक्तव्यवहारासाधारणकारण-पदानि । कर्मजसंयोगजभेदात्संयोगो द्विविधः । हस्तक्रियया हस्तपुस्तकसंयोगः कर्मजः । हस्तपुस्तकसंयोगात् कायपुस्तक-संयोगःसंयोगजसंयोगः।क्वचिदव्याप्यवृत्तिरपि संयोगो भवति। यथा कपिसंयोगो वृक्षादौ। स्वप्रतियोगित्वस्वसामानाधिकरण्यो-भयसम्बन्धेनाभाववत्त्वमव्याप्यवृत्तित्वम् । पृथिवीजले संयुक्ते इत्यादिव्यवहारात् संयोगः पृथिव्यादिनवद्रव्यवृत्तिः ।

विभागस्य लक्षणं उच्यताम्—

## संयोगनाशको गुणो विभागः । नवद्रव्यवृत्तिः ।

( न्यायबो० ) विभागं लक्षयति–संयोगेति । संयोगनाशक-त्वविशिष्टगुणत्वं विभागस्य लक्षणम् । विशेषणमात्रोपादाने

---

(१) संयुक्तव्यवहारासाधारणधर्मत्वं संयुक्तव्यवहारत्वे स्यात्तद्वारणाय हेतुरिति पदमिति ।

क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिवारणाय गुणत्वं ( १ ) इति विशेष्योपादानम् ।

(पदकृ०) संयोगेति । संयोगनाशजनक इत्यर्थः । कालेऽतिप्रसक्तिवारणाय गुणपदम् । ईश्वरेच्छादिवारणाय 'असाधारण' इत्यपि बोध्यम् । ननु 'असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यात् इति चेत् न । क्रियायामतिप्रसक्तिवारणाय तस्याप्यावश्यकत्वात् ।

(प्रतिवि०) संयोगनाशकत्वे सति गुणत्वं विभागलक्षणम् । कालेऽतिप्रसंगवारणाय गुण इति । न चेश्वरेच्छायामतिव्याप्तिः, संयोगनाशकत्वे सत्यसाधारणगुणत्वमिति स्वीकारात् । न चासाधारणपदोपादाने गुणपदं व्यर्थमिति वाच्यम् । क्रियायामतिव्याप्तिवारणाय तस्याप्यावश्यकत्वात् । पृथिवी जलाद्विभक्तेत्यादिव्यवहारात् । विभागो नवद्रव्यवृत्तिः । कर्मजविभागजभेदाद्विभागो द्विविधः । हस्तक्रियया हस्तपुस्तकविभागः कर्मजः । हस्तपुस्तकविभागात् कायपुस्तकविभागो विभागजविभागः । विभागोऽप्यव्याप्यवृत्तिः ।

परत्वापरत्वयोर्लक्षणं भेदश्च वाच्य इति प्रश्ने उत्तरम्—

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे । ते द्विविधे दिक्कृते कालकृते च । दूरस्थे दिक्कृतं**

---

( १ ) क्रमश्चात्रत्यः पूर्वं द्रव्ये क्रिया क्रियातो विभागस्ततः पूर्वसंयोगनाशो भवति । तथा च संयोगनाशकत्वं क्रियाविभागयोरुभयोरपि सुवचं गुणपदप्रयोगे च क्रियाया गुणत्वाभावान्न दूषणम्, साक्षात्पदोपादाने च गुणपदमनुपादेयमेवेति न दोषः ।

परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् ( १ ) ।

( पदकृ० ) परेति । परव्यवहारासाधारणं कारणं परत्वम् । अपरव्यवहारासाधारणं कारणमपरत्वम् इत्यर्थः । दण्डादि-( २ ) वारणाय 'परव्यवहार इति । कालादिवारणाय असाधारण, ( ३ ) इति । परव्यवहारत्ववारणाय 'कारण, इति । एवमेव द्वितीयेऽपि बोध्यम् ।

( प्रतिवि० ) अयमस्मात् पर इति व्यवहारासाधारणकारणत्वं परत्वम् । अयमस्मादपर इति व्यवहारासाधारणकारणत्वमपरत्वम् । परत्वलक्षणे परव्यवहारासाधारणपदे दण्डादौ कालादौ चातिव्याप्तिवारणाय । एवमपरत्वलक्षणेऽपि ज्ञेयम् । परत्वमपरत्वं चोभयमपि दिक्कृतकालकृतभेदाद्द्विविधम् । दूरस्थे घटे समीपस्थघटापेक्षया दैशिकं परत्वम् । समीपस्थे घटे दूरस्थघटापेक्षया दैशिकमपरत्वम् । ज्येष्ठे पुत्रे कनिष्ठपुत्रापेक्षया कालिकं परत्वम् । कनिष्ठे पुत्रे ज्येष्ठपुत्रापेक्षया कालिकमपरत्वम् ।

गुरुत्वस्य किं लक्षणमिति प्रश्ने उत्तरम्—

आद्य ( ४ ) पतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ।

---

( १ ) पृथिव्यादिचतुष्टयमनोवर्तिनीति क्वचिदधिकः पाठः ।

( २ ) दण्ड इत्यभिवाक्नाख्यासाधारणत्वं दण्डेऽप्यस्तीति भावः ।

( ३ ) परव्यवहारे असाधारणधर्मत्वं परव्यवहारस्याप्यतोऽसाधारणकारणेति ।

( ४ ) आद्यत्वञ्चेह स्वसमानाधिकरणपतनप्रतियोगिध्वंसासमानकालिकत्वम् । द्वितीयादिपतनप्राथमिकपतनध्वंससमानकालिकत्वात्तद्व्युदास इति भावः ।

( न्यायबो० ) गुरुत्वं लक्षयति–आद्येति । द्वितीयपतनक्रियायां वेगस्यासमवायिकारणत्वात्तत्रातिव्याप्तिवारणाय 'आद्य' इति । उत्तरलक्षणेऽप्याद्यविशेषणं पूर्ववद्योजनीयम् ।

(पदकृ०)आद्येति । दण्डादिवारणाय (१) असमवायी,इति । रूपादिवारणाय'पतन,(२)इति।वेगेऽतिव्याप्तिवारणाय'आद्यम्,इति।

( प्रतिवि० ) आद्यं यत्पतनं तस्यासमवायिकारणत्वं गुरुत्वलक्षणम् । पतनक्रियायामाद्यत्वं स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमकालिकत्वम् । तेन द्वितीयपतनस्य निरासस्तस्याद्यपतनध्वंससमकालिकत्वात् । लक्षणे आद्यपददानाद्वेगस्य निरासः । दण्डादिवारणायासमवायीति । पतनपदं रूपादिवारणाय । गुरुत्वं पृथिवीजलयोरेव नान्येषाम् ।

द्रवत्वस्य किं लक्षणं तच्च कतिविधम् कुत्र च कीदृशम्—

**आद्यस्यन्दना (३) समवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकं नैमित्तिकं च । तत्र सांसिद्धिकं (४) जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ।**

( १ ) आम्रादिपतनरूपायां क्रियायां बहुधा दण्डलोष्ठादीनां निमित्तकारणत्वमतोऽसमवायि इति ।

(२)घटादिरूपाद्यसमवायिकारणत्वं कपालादिगतरूपादीनामत:पतनेतिपदम्।

( ३ ) स्यन्दनस्रवणरूपाक्रियाविशेषस्तदसमवायिकारणमित्यर्थः ।

( ४ ) सांसिद्धिकत्वं नाम निमित्तानपेक्षाधोदेशप्रसरत्वम् ।

( पदकृ० ) आद्यस्यन्दनेति । दण्डादि (१) वारणाय 'असमवायि' इति । रसादिवार ( २ ) णाय 'स्यन्दन' इति ।

( प्रतिबि० ) आद्यं यत्स्यन्दनं स्रवणं तस्यासमवायिकारणत्वं द्रवत्वलक्षणम् । द्वितीयादिस्यन्दनवारणायाद्य इति । दण्डादौ रसादौ चातिव्याप्तिवारणाय क्रमेणासमवायिपदं स्यन्दनपदं च । द्रवत्वं पृथिव्यां जले तेजसि च वर्तते । द्रवत्वं हि सांसिद्धिकनैमित्तिकभेदाद्द्विविधम् । तेजस्संयोगजन्यं नैमित्तिकम् । तद्भिन्नं सांसिद्धिकं स्वाभाविकम् । जले स्वाभाविकं द्रवत्वम् । हिमकरकयोर्जलीयत्वेऽप्यदृष्टवशाद् द्रवत्वप्रतिबन्धः । नैमित्तिकं द्रवत्वं पृथिव्यां तेजसि च । घृतादिरूपायां पृथिव्यामग्निसंयोगे सति द्रवत्वम् । सुवर्णरजतादिरूपे तेजस्यग्निसंयोगेन द्रवत्वम् ।

स्नेहस्य किं लक्षणं तच्च कुत्र वर्तत इत्यस्योत्तरम्—

## चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ।

( न्यायबो० ) स्नेहं लक्षयति—चूर्णादीति । चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम् । पिण्डीभावो नाम चूर्णादेर्धारणाकर्षणहेतुभूतो विलक्षणसंयोगः । तादृशसंयोगे

---

( १ ) स्यन्दनं प्रस्रवणं तत्र निमित्तकारणता कुत्रचित् प्रतिरुद्धसलिलस्थले दण्डस्यापि भवत्यतोऽसमवायि इति पदमिति भावः ।

( २ ) अवयविगतरसत्वावच्छिन्नं प्रत्यवयवगतरसत्वावच्छिन्नस्य कारणत्वादिति भावः ।

स्नेहस्यैवासाधारणकारणत्वं न तु जलादिगतद्रवत्वस्य । तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः । अतः स्नेह एवासाधारण (१) कारणम् । विशेषणमात्रोपादाने कालादावतिव्याप्तिः, तद्वारणाय विशेष्योपादानम् । वस्तु (२) तस्तु द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वं स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात् । जले द्रुतत्वविशेषणात्करकादिव्यावृत्तिः ।

(पदकृ०) चूर्णादीति । 'चूर्णं पिष्टं तदेवादिर्यस्य मृत्तिकादेः स चूर्णादिः तस्य पिण्डीभावः संयोगविशेषः तस्य हेतुर्निमित्तकारणं स्नेह इत्यर्थः । कालादावतिव्याप्तिवारणाय 'पिण्डीभाव' इति । चूर्णपदं स्पष्टा (३) र्थम् ।

(प्रतिवि०) चूर्णं आदिर्यस्य मृत्तिकादेस्तस्य पिण्डीभावे यो हेतुः सः । तथा च चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहलक्षणम् । चूर्णादेर्धारणाकर्षणादिहेतुभूतो विलक्षणसंयोगः पिण्डीभावस्तत्र स्नेह एवासाधारणकारणम् । जलादिगतद्रवत्वस्य पिण्डीभावकारणत्वे द्रुतसुवर्णादिसंयोगेऽपि पिण्डीभावः स्यात् । लक्षणे विशेषणेन विशेष्येण च यथाक्रमं रूपादौ कालादौ च नातिव्याप्तिः । जले एव स्नेहो नान्यत्र । तैलादौ जलगतस्यैव स्नेहस्य भानम् ।

---

(१) असाधारणं निमित्तकारणमित्यर्थः ।

(२) वस्तुतस्त्विति ग्रन्थेन स्नेहस्य मूलोक्तं लक्षणं व्याहतमतोऽगत्या स्नेहत्वजातीयत्वमेव लक्षणं वाच्यमिति भावः ।

(३) लोहादिपिण्डीभावहेतुभूताग्निसंयोगव्यभिचारवारणाय चूर्णपदं न स्पष्टार्थमिति चिन्त्यम् ।

शब्दस्य किं लक्षणं के च भेदाः—

**श्रोत्रग्राह्यो गुणःशब्दः। आकाशमात्रवृत्तिः। स द्विविधः। ध्वन्यात्मको वर्णात्मकश्च। तत्र ध्वन्यात्मको भेर्यादौ (१) वर्णात्मकः संस्कृतभाषारूपः।**

(न्यायबो०) शब्दं लक्षयति-श्रोत्रग्राह्य इति। शब्दत्वेऽतिव्याप्तिवारणाय 'गुण' इति। स (२) त्रिविधः संयोगजो विभागजः शब्दजश्चेति। यथा भेरीदण्डसंयोगजन्यो झांकारादिशब्दः हस्ताभिघातसंयोगादिजन्या मृदङ्गादिशब्दः। वंशे पाट्यमाने दलद्वयविभागजन्यः चटचटादि शब्दः। शब्दोत्पत्तिदेशमारभ्य कर्णविवरपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनसम्बन्धाच्छब्दधारा जायन्ते। तत्रोत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम्।

(पदकृ०) श्रोत्रेति। शब्दत्वेऽतिव्याप्तिवारणाय 'गुण' इति। रूपादिवारणाय 'श्रोत्रग्राह्य' इति। वस्तुतस्तु श्रोत्रोत्पन्नशब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्नेऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्वे तात्पर्याद्गुणपदमनुपादेयमेव।

---

(१) अत्रादिपदेन वेणुवीणादिनां संग्रहः।

(२) स द्विविधोपि शब्दः संयोगजविभागजशब्दभेदेन त्रिविधो भवति। तत्र ध्वन्यात्मकस्य त्रिविधत्वं तु टीकाकारेण दर्शितम्। वर्णात्मकस्य त्रिविधत्वञ्चेत्थं वायुकण्ठसंयोगेन ओष्ठद्वयविभागेन वीचीतरङ्गन्यायेन च त्रिविधत्वम्। तत्र शब्दमात्रे समवायिकारणमाकाशम्। असमवायिकारणञ्च यथाक्रमेण कण्ठाकाशसंयोगः। ओष्ठाकाशविभागादिरिति।

( प्रतिवि० ) श्रोत्रग्राह्यत्वे सति गुणत्वम् । श्रोत्रेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वे सति गुणत्वं शब्दलक्षणमिति यावत् । शब्दत्वजातौ रूपादौ चातिव्याप्तिवारणाय क्रमेण गुणपदं श्रोत्रग्राह्यपदं च । ध्वनिवर्णभेदात् शब्दो द्विविधः । भेरीमृदङ्गादिजन्यो ध्वनिः । संस्कृतप्राकृतभाषारूपो वर्णः । द्विविधोऽपि संयोगजविभागजशब्दभेदात् त्रिविधः । भेरीदण्डसंयोगाज्जातो झाङ्कारादिः संयोगजः । वंशपाटनादिजन्यश्चटचटादिशब्दो विभागजः । शब्दोत्पत्तिदेशमारभ्य कर्णच्छिद्रं यावद्वीचीतरङ्गन्यायेन कदम्बगोलकन्यायेन वा निमित्तभूतपवनसम्बन्धाज्जायमानायां शब्दधारायामुत्तरोत्तरशब्दः पूर्वपूर्वशब्दजः । शब्दो ह्याकाशमात्रवृत्तिः । मात्रपदेन वाय्ववयवेषु सूक्ष्मसूक्ष्मशब्दपूर्वकमहाशब्दोत्पत्तिर्वारिता ।

बुद्धेः किं लक्षणं कश्च भेद इत्यस्योत्तरमाह—

**सर्वव्यवहार (१) हेतुर्गुणो बुद्धिर्ज्ञानम् । (२) सा द्विविधा स्मृतिरनुभवश्च ।**

( न्यायबो० ) बुद्धेर्लक्षणमाह–सर्वव्यवहारेति । व्यवहारः शब्दप्रयोगः,ज्ञानं विना शब्दप्रयोगासम्भवाच्छब्दप्रयोगरूपव्यव-

---

( १ ) व्यवहारत्वावच्छिन्नकार्य्यतानिरूपितासाधारणकारणत्वं बुद्धित्वमिति निष्कर्षः ।

( २ ) लाघवेन लक्षणान्तरमाह-ज्ञानमिति । ज्ञानत्वजातिमत्त्वं बुद्धित्वमित्यर्थः । लाघवञ्च शरीरकृतमुपस्थितिकृतं सम्बन्धकृतमिति त्रिविधमिति बोध्यं प्रकृते चेदमेवेति ।

हारहेतुत्वं ज्ञानस्य लक्षणम्। बुद्धिं विभजते—स्मृतिरनुभवश्चेति।

( पदकृ० ) बुद्धिलक्षणमाह—सर्वेति। सर्वे ये व्यवहारा आहारविहारादयस्तेषां हेतुर्बुद्धिरित्यर्थः। दण्डादिवारणाय 'सर्वव्यवहार, इति। कालादिवारणाय 'असाधारण इत्यपि देयम्।

( प्रतिवि० ) सर्वे ये व्यवहारा आहरणविहरणप्रभृतयस्तेषां हेतुर्बुद्धिः। व्यवहारत्वावच्छिन्नकार्यतानिरूपितासाधारणकारणत्वं तस्या लक्षणम्। रूपादौ बुद्धित्वे चातिव्याप्तिवारणाय लक्षणे क्रमेण सर्वव्यवहारपदं गुणपदं च ज्ञेयम्। वस्तुतस्तु ज्ञानत्वमात्रं बुद्धिलक्षणम्। स्मृत्यनुभवभेदाद्बुद्धिर्द्विधा।

स्मृतेः किं लक्षणम्—

## संस्कारजन्यं ज्ञानं स्मृतिः (१)।

( न्यायबो० ) स्मृतिं लक्षयति—( संस्कारेति )। संस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम्। विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिः तद्वारणाय विशेषणोपादानम्। संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम्। ध्वंसे प्रतियोगिनः कारणत्वात् संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात्।

( पदकृ० ) संस्कारेति। संस्कारध्वंसेऽतिव्याप्तिवारणाय 'ज्ञानम्' इति। अनुभवेऽतिव्याप्तिवारणाय 'संस्कारजन्यम्' इति।

---

(१) स्मृतित्वञ्च स्मरामीत्यनुभवसिद्धो जातिविशेष इति।

तथापि प्रत्यभिज्ञायामतिव्याप्तिवारणाय संस्कारमात्रजन्यत्वं विवक्षणीयम्। क्वचित्तथैव पाठः। नचैवं सत्यसम्भवः (१)। तस्य (२) संस्कारजन्यत्वे सतीन्द्रियार्थसन्निकर्षाजन्यार्थकत्वात्।

(प्रतिवि०) भावनाख्यसंस्कारेतराजन्यत्वविशिष्टसंस्कारजन्यज्ञानत्वं स्मृतिलक्षणम्। स एवायमिति प्रत्यभिज्ञायामनुभवे संस्कारध्वंसे चातिप्रसङ्गवारणाय क्रमेण संस्कारेतराजन्यत्वं संस्कारजन्यत्वं ज्ञानत्वं च विशेषणम्।

अनुभवलक्षणं तद्भेदश्च प्रदर्शनीय इति प्रश्ने उत्तरम्—

**तद्भिन्नं ज्ञानमनुभवः। स द्विविधः यथार्थोऽयथार्थश्च।**

(न्यायबो०) अनुभवं लक्षयति—तद्भिन्नमिति। तद्भिन्नत्वं नाम स्मृतिभिन्नज्ञानत्वम्। तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावतिव्याप्तिः, अतस्तद्वारणाय तयोरुपादानम्। अनुभवं विभजते—स द्विविध इति।

(पदकृ०) तदिति। स्मृतित्वावच्छिन्नभिन्नमित्यर्थः। तेन यत्किञ्चित्स्मृतिभिन्नत्वस्य स्मृतौ सत्त्वेऽपि न क्षतिः। घटादावतिव्याप्तिवारणाय, 'ज्ञानम्' इति। स्मृतिवारणाय 'तद्भिन्नमिति।

---

(१) कार्य्यमात्रस्योद्दिष्टादिसाधारणकारणजन्यत्वेन संस्कारमात्रजन्यत्वं कस्यापि पदार्थस्य नास्तीति भावः।

[२] मात्रपदस्य।

( प्रतिवि० ) यावत्स्मृतिभिन्नज्ञानत्वमनुभवलक्षणम् । स्मृतौ घटे चातिव्याप्तिवारणाय क्रमेण तद्भिन्नपदं ज्ञानपदं च । यथार्था-यथार्थभेदादनुभवो द्विविधः । एकस्यां स्मृतावन्यस्मृतिभिन्न-त्वसत्त्वात्स्मृतौ यावदिति विशेषणम् । यथार्थायथार्थभेदेनानुभवो द्विविधः ।

यथार्थानुभवस्य प्रमाया वा लक्षणं निदर्शयतेति प्रश्ने उत्तरम्—

**तद्वति ( १ ) तत्प्रकारकोऽनुभवो यथार्थः । सैव ( २ ) प्रमेत्युच्यते ।**

( न्यायबो० ) यथार्थानुभवं लक्षयति—तद्वतीति । 'तद्वति' इत्यत्र सप्तम्यर्थो विशेष्यत्वम्, तच्छब्देन प्रकारीभूतो धर्मो धर्तव्यः । तथा च तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं यथार्था-नुभवस्य लक्षणम् । उदाहरणम्—रजते 'इदं रजतम्, इति ज्ञानं रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकम् 'तद्वन्निष्ठविशेष्य-तानिरूपिततन्निष्ठप्रकार ( ३ ) ताशालित्वम्, इति निष्कर्षः । अन्यथा यथाश्रुते, रङ्गरजतयोः 'इमे रजतरङ्गे, इत्याकारकसमू-हाऽ ( ४ ) वलम्बनभ्रमेऽतिव्याप्तिः । तत्रापि रजतत्ववद्विशेष्य-कत्वरजतत्वप्रकारकत्वयो रङ्गत्वविशेष्यकत्वरङ्गत्वप्रकारकत्वयोः

---

[ १ ] यथा घटत्ववति घटे घटत्वप्रकारकानुभवो यथार्थ इत्यर्थः ।

[ २ ] ननु भाष्यादिप्राचीनग्रन्थेषु प्रमाभेदेन त्रिभागोऽस्तीत्यत आह-सैव प्रमेति ।

[ ३ ] प्रकारतानिरूपितप्रकारताशालिज्ञानत्वमिति फलितोऽर्थः ।

[ ४ ] ज्ञाने समूहावलम्बनत्वञ्च विशेष्यताद्वयावगाहित्वम् ।

सत्त्वात्। उक्तनिष्कर्षे तु दर्शितभ्रमे नातिव्याप्तिः। समूहालम्बनभ्रमस्य रङ्गांशे रजतत्वावगाहित्वेन रजतांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्ववद्विशेष्यतानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्ववद्विशेष्यतानिरूपितत्वाभावाच्चेति।

(पदकृ०) तद्वतीति। तदेव प्रकारो यस्य स तथेत्यर्थः। तद्वद्विशेष्यकतत्प्रकारकः, इति यावत्। स्मृतिवारणाय 'अनुभव, इति। अयथार्थानुभवनिरासाय 'तद्वति' इति। निर्विकल्पकेऽतिव्याप्तिवारणाय 'तत्प्रकारः' इति।

(प्रतिवि०) सः घटत्वादिर्विद्यते यत्र तत्प्रकारको घटत्वादिप्रकारकोऽनुभवः। तद्वद्विशेष्यत्वविशिष्टतत्प्रकारकत्वं यथार्थानुभवलक्षणम्। तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतावत्त्वमिति यावत्। इदं रजतमित्यत्र रजतत्ववति रजते रजतत्वप्रकारकत्वस्य सत्त्वाल्लक्षणसमन्वयः। तद्वन्निष्ठेत्यादिलक्षणास्वीकारे तु रङ्गरजतयोरिमे रङ्गरजते इति समूहालम्बनभ्रमेऽतिव्याप्तिः, रजतत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोः रङ्गत्ववद्विशेष्यकत्वरङ्गत्वप्रकारकत्वयोः सत्त्वात्। उक्तलक्षणस्वीकारे तु समूहालम्बनभ्रमस्य रजतांशे रङ्गत्वावगाहित्वेन रङ्गांशे रजतत्वावगाहित्वेन रजतत्वरङ्गत्वप्रकारत्वयोः रजतत्ववद्रङ्गत्ववद्विशेष्यतानिरूपितत्वाभावान्न दोषः। मूललक्षणे अयथार्थानुभवे निर्विकल्पके स्मृतौ चातिव्याप्तिवारणाय क्रमेण तद्वति तत्प्रकारक अनुभव इति पदानि। यथार्थानुभव एव शास्त्रे प्रमेत्युच्यते।

**अयथार्थानुभवस्य लक्षणं प्रदर्शयतेति प्रश्ने उत्तरम्—**

**तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः ।**

( न्यायबो० ) अयथार्थानुभवं लक्षयति—तदभाववतीति । अत्रापि पूर्ववत् तदभाववद्विशेष्यतानिरूपिततन्निष्ठप्रकार(१)-ताशालिज्ञानत्वं विवक्षणीयम् । अन्यथा रङ्गरजतयोः 'इमे रङ्ग-रजते' इत्याकारकसमूहालम्बनप्रमायामतिव्याप्तिः । एतत्समू-हालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्र-कारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारक-त्वयोरङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च स-त्वात् निष्कर्षे तु 'रजतांशे रजतत्वावगाहित्वेन रङ्गांशे रङ्गत्वा-वगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गविशेष्य-तानिरूपितत्वाभावात्, एवं रङ्गत्वप्रकारताया रङ्गत्वाभाववद्र-जतविशेष्यतानिरूपितत्वाभावात् नातिव्याप्तिः । उदाहरणम् यथा शुक्तौ इदं रजतम्' इति ।

( पदकृ० ) तदभाववतीति । 'तदभाववद्विशेष्यकतत्प्रकार-कोऽनुभवो यथार्थानुभवः, इति । यथा शुक्तौ 'इदं रजतम्' इति ज्ञानम् । स्मृतिवारणाय 'अनुभवः' इति । यथार्थानुभवनिरसनाय 'तदभाववति' इति । निर्विकल्पक ( २ ) वारणाय 'तत्प्रकारक' इति ।

---

( १ ) तन्निष्ठप्रकारतानिरूपितप्रकारताशाल्यनुभवत्वमिति फलितोऽर्थः ।

( २ ) निर्विकल्पकत्वञ्च प्रकारतानवगाहिज्ञानत्वम् ।

( प्रतिबि० ) तदभाववद्विशेष्यत्वविशिष्टतत्प्रकारकत्वमयथार्थानुभवलक्षणम् । तदभाववद्विशेष्यतानिरूपिततन्निष्ठप्रकारतावत्त्वमिति निष्कर्षः । यथा रजतत्वाभाववति शुक्तौ इदं रजतमिति रजतत्वप्रकारकं ज्ञानम् । यथार्थानुभवे निर्विकल्पके स्मृतौ चातिव्याप्तिवारणाय लक्षणे क्रमेण तदभाववति तत्प्रकारकानुभवपदानि । तदभाववद्विशेष्यतेत्याद्यनुक्तौ रङ्ग रजतयोरिमे रङ्गरजते इति प्रमायां रङ्गरजतोभयविशेष्यकत्व–रङ्गत्वरजतत्वप्रकारकत्वस्य रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयोः रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वादतिव्याप्तिः । उक्तलक्षणे तु रजतांशे रजतत्वस्य रङ्गांशे रङ्गत्वस्य चावगाहनेन रजतत्वरङ्गत्वप्रकारतयोः रजतत्वाभाववद्रङ्ग–रङ्गत्वाभाववद्रजतविशेष्यतानिरूपितत्वाभावान्नातिप्रसङ्गः ।

यथार्थानुभवभेदान् प्रदर्शयतेति प्रश्ने उत्तरम्—

## यथार्थानुभवश्चतुर्विधः—प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । ३२

( न्यायबो० ) यथार्थानुभवं विभजते–'चतुर्विधः' इति ।

( पदकृ० ) यथार्थेति । यथार्थानुभवः 'प्रत्यक्षमेव' इति चार्वाकाः 'अनुमितिरपि' इति कारणाद्बौद्धाः । 'उपमितिरपि' इति नैयायिकैकदेशिनः । 'शब्दमपि' इति नैयायिकाः । 'अर्थापत्तिरपि' इति प्रभाकराः । 'अनुपलब्धिकोऽपि' इति भाट्टवेदान्ति-

नौ। 'सांभविकैतिह्यकावपि' इति पौराणिकाः। 'चैष्टिकोऽपि' इति तान्त्रिकाः। एतेषां मतेऽस्वरसं ( १ ) सम्भाव्य तस्य चातुर्विध्यं स्पष्टं दर्शितम्।

( प्रतिवि० ) प्रत्यक्षानुमित्युपमितिशब्दभेदेन यथार्थानुभवस्य चत्वारो भेदाः। प्रत्यक्षमेव यथार्थानुभव इति चार्वाकाः। प्रत्यक्षानुमिती द्वे इति काणादा बौद्धाश्च। प्रत्यक्षानुमित्युपमितय इति परे। प्रत्यक्षानुमित्युपमितिशब्दार्थापत्तय इति प्राभाकराः। प्रत्यक्षानुमित्युपमितिशब्दार्थापत्त्यनुपलब्धय इति भाट्टा वेदान्तिनश्च। प्रत्यक्षानुमित्युपमितिशब्दार्थापत्त्यनुपलब्धिसम्भवैतिह्यानीति पौराणिकाः। चेष्टासहिताष्टकमिति तान्त्रिकाः। एतेषां सर्वेषां चतुर्विधेष्वेव यथार्थानुभवेष्वेवान्तर्भाव इति चतुर्विध इत्यनेन सूचितम्।

---

( १ ) अस्वरसबीजन्तु अर्थापत्त्यादिप्रमाणानां पूर्वोक्तप्रत्यक्षादिप्रमाणेष्वेवान्तर्भावसम्भवे पृथक्कल्पनमनर्थकमिति बोध्यम्। तथा हि उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः। उपपाद्यज्ञानं करणम्। उपपादकज्ञानञ्च फलम्। रात्रिभोजनमन्तरेण दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वमुपपाद्यम्। रात्रिभोजनञ्चोपपादकम्। अर्थस्यापत्तिः कल्पना यस्मादित्यर्थापत्तिशब्दः समासभेदेन फलकरणयोर्वाचक इति बोध्यम्। तथा च पीनो देवदत्तो दिवा न भुङ्क्ते इति दृष्टे श्रुते वा दिवाभुञ्जानस्य पीनत्वं रात्रिभोजनं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानं भवति इयमेवार्थापत्तिः ततो देवदत्तो रात्रिभोजी दिवाऽभुञ्जमानत्वे सति पीनत्वादिति केवलव्यतिरेक्यनुमानेनैव सिद्धौ तस्या अकिञ्चित्करत्वादिति। एवमभावप्रत्यक्षेऽप्यनुपलब्धिसहकृतेन्द्रियस्यैव करणत्वेनानुपलब्धेः पृथक्प्रमाणत्वमकिञ्चित्करमिति।

चतुर्णामनुभवानां कानि करणानीति प्रश्ने उत्तरम्—

तत्करण(१)मपि चतुर्विधम्, प्रत्यक्षा—(२)नुमानोपमानशब्दभेदात् ।

(न्यायबो०) तत्करणमिति । फलीभूतप्रत्यक्षादिकरणं चतुर्विधम् इत्यर्थः । प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम् । एकैकप्रमाणलक्षणं तु वक्ष्यते, 'प्रत्यक्षज्ञान, इत्यादिना निर्णयात्मकसम्भवोऽनुमानान्तर्भूतः । एवं चेष्टाप्यनुमानप्रयोजिकैवेति सिद्धं प्रमाणानां चातुर्विध्यमिति भावः ।

(पदकृ०) तदिति । यथार्थानुभवात्मकप्रमायाः करणमित्यर्थः ।

(प्रतिबि०) यथार्थानुभवप्रमायाः फलीभूतप्रत्यक्षानुमित्युपमितिशाब्दानां करणमपि प्रत्यक्षमनुमानमुपमानं शाब्दश्चेति भेदाच्चतुर्विधम् । एतेन प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणमिति सूचितम् ।

---

(१) प्रसङ्गसङ्गत्या प्रमाणं विभजते तत्करणमिति ।

(२) अक्षमक्षं प्रति जातमिति प्रत्यक्षमित्येवं प्रत्यक्षपदमिन्द्रियपरं तदेव विषयपरं ज्ञानपरं च गौण्या वृत्या बोध्यम् । एवमनुमीयते लिङ्गद्वारा ज्ञाप्यतेऽनेनेत्युपमानं लिङ्गपरामर्शः । एवमुपमीयते सादृश्येन ज्ञाप्यतेऽनेनेत्युपमानं सादृश्यज्ञानम् एवं शक्यते निग्रहानुग्रहौ क्रियेतेऽनेनेति शब्दः ।

## करणस्य किं लक्षणम् इति प्रश्ने उत्तरम्—

## असा(१)धारणं कारणं करणम् ।

( न्यायबो० ) करणलक्षणमाह—असाधारणमिति । 'व्यापारवदसाधारणकारणं करणम्' इत्यर्थः । असाधारणत्वं कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्, इत्यर्थः । यथा दण्डादौ घटं प्रत्यसाधारणकारणत्वम् कार्यत्वव्याप्यो घटत्वादिरूपधर्मः, तदवच्छिन्नकार्यता घटे, तन्निरूपितकारणता दण्डे, अतो घटं प्रति दण्डोऽसाधारणकारणम् । अग्न्यादिरूपव्यापारत्वञ्च करणम् साधारणत्वञ्च कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । ईश्वरेच्छादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम् ।

( पदकृ० ) असाधारणमिति । कालादिवारणाय 'असाधारण' इति । व्यापारेऽतिव्याप्तिवारणाय 'व्यापारवत्' इत्यपि देयम् । व्यापारश्च द्रव्यान्यत्वे सति तज्जन्यत्वे सति तज्जन्यजनकः । ईश्वरेच्छादिवारणाय 'तज्जन्यत्वे सति कुलालजन्यत्वे सति कुलालजन्यघटजनकत्वं कुलालपुत्रस्याप्यस्ति अतस्तत्रातिव्याप्तिवारणाय प्रथमं सत्यन्तम् । दण्डरूपादिवारणाय 'तज्जन्यजनकः' इति ।

( प्रतिवि० ) यद्व्यापाराव्यवधानेन फलोत्पत्तिस्तत्त्वमिति यावत् । व्यापारे कालादौ चातिव्याप्तिवारणाय लक्षणे क्रमेण व्यापारवदसाधारणपदे । व्यापारत्वं च तज्जन्यत्वे सति तज्ज-

---

( १ ) प्रमाणज्ञानं करणाधीनमतस्तावत्कारणं निर्वक्ति । असाधारणेति ।

न्यजनकत्वम् अन्यादेर्दण्डजन्यत्वेन दण्डजन्यघटजनकत्वाल्ल-क्षणसमन्वयः ।

कारणस्य किं लक्षणमित्यस्योत्तरम्—

## कार्यनियतपूर्ववृत्ति कारणम् ( १ ) ।

( न्यायबो० ) कारणं लक्षयति—कार्यनियतेति । कार्यं प्रति नियतत्वे सति पूर्ववृत्तित्वम् । नियतत्वविशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यादतो नियतत्वे सति, इति विशेषणम् । नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यात्, अतः 'अन्यथासिद्धत्वम्' अपि कारणलक्षणे निवेशनीयम्, दण्डरूपादेरन्यथासिद्धत्वात् ।

( पदकृ० )कार्येति ।'कार्यान्नियताऽवश्यम्भाविनी पूर्ववृत्तिः पूर्वक्षणवृत्तिर्यस्य तत्तथा इत्यर्थः । अनियतरासभादिवारणाय 'नियत' इति । कार्यवारणाय 'पूर्व' ( २ ) इति दण्डत्वादिवारणाय 'अनन्यथासिद्धत्वं' विशेषणस्यावश्यकत्वेन तत एव रासभादिवारणसम्भवे नियतपदमनर्थकम् एवं च 'अन्यथासिद्धकार्यपूर्ववृत्तिकारणं' इति फलितम् । अनन्यथासिद्धत्वमन्यथासिद्धिशून्यत्वम् । अन्यथासिद्धिश्च अवश्यक्लृप्तनियतपूर्व-

---

( १ ) अनन्यथासिद्धकार्य्याव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्त्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेव कारणत्वमिति निष्कर्षः ।

( २ ) अरण्यस्थदण्डेऽपि स्वरूपयोग्यतायाः सत्त्वाद्घटकारणत्वनिर्वाहः स्वरूपयोग्यत्वञ्च कारणतावच्छेदकधर्मवत्त्वं प्रकृते च दण्डत्वमेव तथेति बोध्यम् ।

वर्त्तिभिर्दण्डादिभिरेव घटरूपकार्यसम्भवे तत्सहभूतत्वं दण्डे-त्यादौ ( १ ), इति तदन्यथासिद्धम् ।

( प्रतिवि० ) कार्यं प्रति नियता पूर्ववृत्तिर्यस्य तत्कारणम्। तथा च कार्यं प्रति नियतत्वविशिष्टपूर्ववृत्तित्वं कारणलक्षणम्। रासभादौ कृते कार्ये चातिव्याप्तिवारणाय क्रमेण नियतपदं पूर्ववृत्तिपदं च । न च दण्डत्वदण्डरूपाकाशकुलालपित्रादीना-मपि कारणत्वं स्यादिति वाच्यम् । अन्यथासिद्धिशून्यत्वे सति कार्यं प्रति नियतत्वे च सति पूर्ववृत्तित्वमिति स्वीकारेणादो-षात् । अवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव घटादिसिद्धौ दण्डत्वादीनामन्यथासिद्धत्वम् ।

कार्यस्य लक्षणम्—

## कार्यं प्रागभावप्रतियोगि ।

( न्यायबो० ) कार्यं लक्षयति–प्रागिति । प्रागभावप्रति-योगित्वं कार्यस्य लक्षणम् । कार्योत्पत्तेः पूर्वम् 'इह घटो भवि-ष्यति' इति प्रतीतिर्जायते । 'एतत्प्रतीतिविषयोऽभावः प्राग-भावः' तत्प्रतियोगि घटादिरूपं कार्यम् ।

( पदकृ० ) प्रागिति । कालादिवारणाय 'प्राग्' ( २ ) इति। असम्भववारणाय 'प्रतियोगि' इति ।

---

( १ ) आदिपदेन दण्डरूपम् ।

( २ ) प्राक्पदाभावेऽन्योऽन्याभावप्रतियोगित्वं पदार्थमात्रेऽस्ति तस्य केवलान्वयित्वात् केवलान्वयित्वञ्च सर्वत्र विद्यमानत्वम् चान्योऽन्याभावप्रति-योगित्वेन नित्यानामपि कार्यत्वापत्तिः स्यादिति भावः ।

(प्रतिबि०) प्रागुत्पत्तेः पूर्वं योऽभावस्तत्प्रतियोगि यत्तत्कार्यमित्यर्थः। यस्याभावः स प्रतियोगि। यथाभावस्य घटादिः तथा च प्रागभावप्रतियोगित्वं कार्यलक्षणम्। नित्यपदार्थवारणाय प्राक्पदम्। असम्भववारणाय प्रतियोगिपदम्।

कारणस्य कति भेदाः—

**कारणं त्रिविधम् (१)—समवाय्यसमवायिनिमित्तभेदात्।**

(न्यायबो०) कारणं त्रिविधमिति। समवायिकारणम्, असमवायिकारणम्, निमित्तकारणं चेति।

(प्रतिबि०) समवायिकारणमसमवायिकारणं निमित्तकारणं चेति भेदात् कारणं त्रिविधम्।

समवायिकारणलक्षणम् उच्यताम्—

**यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्। यथा तन्तवः पटस्य। पटश्च स्वगतरूपादेः (२)।**

(न्यायबो०) समवायिकारणं लक्षयति—यत्समवेतमिति। 'यस्मिन् समवेतं सत् समवायेन सम्बद्धं सत् कार्यम् उत्पद्यते

---

(१) इदमपि भावकार्य्यमात्रे, अभावकार्य्यमात्रे तु निमित्तकारणमात्रमपेक्षितमिति बोध्यम्।

(२ अत्रादिपदेन क्रियापरिग्रहः।

तत्समवायिकारणम् इत्यर्थः । उदाहरणं—'यथा तन्तवः' इति। तन्तुषु समवायेन सम्बद्धं सत् पटात्मकं कार्यमुत्पद्यते इति तन्तवः समवायिकारणम् इत्यर्थः । सामान्यलक्षणं तु—'समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वम्' इति । समवायसम्बन्धेन घटाधिकरणे कपालादौ कपालादेस्तादात्म्यसम्बन्धेनैव सत्त्वात् समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः । जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव कारणम् कारणत्वात् । जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्, अतो गुणादावपि द्रव्यमेव समवायिकारणम् इत्याशयेनाह—पटश्च स्वगतरूपादेरिति 'समवायिकारणम्' इत्यनुषज्यते ।

( पदकृ० ) यदिति । यस्मिन् समवायसम्बन्धेन वर्तमानं कार्यमुत्पद्यते तदित्यर्थः । चक्रादिवारणाय समवेतमिति ।

( प्रतिवि० ) यस्मिन् समवेतं समवायसम्बन्धेन सम्बद्धं कार्यमुत्पद्यते जायते तत् समवायिकारणम् । तन्तुषु समवायेन सम्बद्धं पटरूपं कार्यं जायते इति तन्तवः पटस्य समवायिकारणम्। समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वमिति सामान्यलक्षणम् । यथा तन्तवः पटस्य समवायिकारणम् । पटोऽपि स्वनिष्ठनीलादिरूपस्य क्रियायाश्च समवायिकारणम् । पटे तद्गतरूपक्रिययोः समवायेन सत्त्वात् ।

असमवायिकारणस्य किं लक्षणम्—

कार्येण कारणेन ( १ ) वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणमसमवायिकारणम् । यथा तन्तुसंयोगः पटस्य । तन्तुरूपं पटरूपस्य ।

( न्यायबो० ) असमवायिकारणं लक्षयति—कार्य्येणेति । असमवायिकारणं द्विविधम् । कार्येण सहैकस्मिन्नर्थे समवेतं सद्यत् कारणं तदसमवायिकारणम् इत्यन्वयः । कारणेन सहैकस्मिन्नर्थे समवेतं सद्यत् कारणं तदसमवायिकारणम्, इत्यन्वयः । जन्यद्रव्यमात्रेऽवयवे संयोगस्यैवासमवायिकारणत्वात्

---

( १ ) न च समानाधिकरणयोरेव कार्य्यंकारणभाव इति व्याप्त्या तन्तुरूपं पटगतरूपस्यासमवायिकारणं न स्यात् तयोः समानाधिकरण्याभावात् । अत आह-कारणेन वेति । कार्य्यसमवायिकारणेनेत्यर्थः । तथा च पटसमवायिकारणं तन्तुसमुदायस्तत्र च तन्तुरूपस्यापि सत्वमित्येवं स्वसमवायिसमवायसम्बन्धेन तन्तुरूपमपि पटगतं तत्र च पटरूपस्य सत्वाद् भवति कार्य्यंकारणभाव इति भावः । स्वपदेन तन्तुरूपं ग्राह्यम् । नचैवं परम्परासम्बन्धस्य कार्य्यंकारणभावनियामकत्वे यावदसंश्लिष्टपदार्थानामपि कार्य्यंकारणभावः स्यात् परम्परासम्बन्धस्यानुगतत्वात् न हि जगति कोपि पदार्थः परम्परासम्बन्धेनासम्बद्धोऽस्ति इत्यत आह-कार्य्येण कारणेन वेति । तथा च न हि यावत् परम्परा सम्बन्धाश्रयणम् । किन्तु समवायस्य स्वसमवायिसमवायस्यैव वा इमावेवशास्त्र कार्यैकार्थ प्रत्यासत्तित्वेन कारणैकार्थ प्रत्यासत्तित्वेन च व्यवह्रियेते इति ।

पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वं दर्शयन् प्रथममुदाहरति यथा तन्तुसंयोगः पटस्य इति। पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवेतं सत् समवायसम्बन्धेन वर्तमानं सत् पटात्मककार्यं प्रति तन्तुसंयोगात्मकं कारणमसमवायिकारणमित्यर्थः। द्वितीयमुदाहरति—'तन्तुरूपम्' इति। कारणेन सह पटरूपसमवायिकारणीभूतपटेन सह एकस्मिन्नर्थे तन्तुरूपेऽर्थे समवेतं सत् समवायसम्बन्धेन वर्तमानं सत् तन्तुरूपं प्रति कारणं भवति, अतोऽसमवायिकारणं तन्तुरूपं पटरूपस्य। समान्यलक्षणं तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्ना कारणता तादृशकारणताश्रयत्वम् असमवायिकारणत्वम्' इति। द्रव्यासमवायिकारणीभूतावयवसंयोगादौ तु समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता (१) समवायसम्बन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते। एवं आद्यपतनक्रियायां च गुरुत्वद्रवते असमवायिकारणे भवतः। आद्यपतनक्रियां प्रति आद्यस्पन्दनक्रियां प्रति च समवायसम्बन्धेनैव तयोः कारणत्वात्। अवयविगुणादौ त्ववयवगुणादेः स्वसमवायिसमवेतसम्बन्धेनैव कारणत्वात् तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयवगुणादौ वर्तते। अवयवगुणभूतकपालरूपतन्तुरूपादेःस्वशब्दग्राह्यकपालरूपतन्तुरूपसमवायिकपालतन्तुसमवेतत्वसम्बन्धेन घटपटादौ कपालरूपतन्तुरूपयोः सत्त्वात्।

---

( १ ) निरूपिता निरूपकता च स्वरूपसम्बन्धविशेष एवेति बोध्यम्।

( पदकृ० ) कार्येणेति। कार्येण सह कारणेन सह वा एकस्मिन्नर्थे समवेतत्वे सति, आत्म ( १ ) विशेषगुणभिन्नत्वे सति, यत्कारणं तदसमवायिकारणम्। तन्तुसंयोगादावव्याप्तिवारणाय 'कार्येण' इति। तन्तुरूपादावव्याप्तिवारणाय 'कारणेन' इति। आत्मविशेषगुणेऽतिव्याप्तिवारणाय 'आत्मविशेषगुणभिन्नत्वे सति' इति। विशेषवारणाय 'कारणम्' इति।

( प्रतिवि० ) कार्येण सहैकस्मिन्नर्थे समवेतत्वे सति कारणत्वमसमवायिकारणत्वम्। एवं कार्यसमवायिकारणेन सहैकस्मिन्नर्थे समवेतत्वे सति कारणत्वमसमवायिकारणत्वम्। जन्यद्रव्यं प्रत्यवयवसंयोगस्यैवासमवायिकारणत्वनियमात् तन्तुसंयोगः कार्येण पटेन सहैकस्मिन्तन्तुपदार्थे समवेत इति सपटासमवायिकारणम्। पटरूपसमवायिकारणेन पटेन सहैकस्मिन् तन्तुरूपेऽर्थे समवेतं सत् तन्तुरूपं पटरूपासमवायिकारणम्। सामान्यलक्षणन्तु समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन सम्बद्धत्वे सत्यात्मविशेषगुणान्यत्वे सति कारणत्वमसमवायिकारणत्वम्। तन्तुसंयोगतन्तुरूपादौ, आत्मविशेषगुणेषु चातिव्याप्तिवारणाय क्रमेण प्रथमसत्यन्तं द्वितीयसत्यन्तञ्च। कारणपदं विशेषेऽतिव्याप्तिवारणाय।

---

( १ ) आत्मसामान्यगुणानामात्ममनः संयोगादीनां ज्ञानादिकं प्रत्यसमवायिकारणत्वेऽपि तद्विशेषगुणानां ज्ञानादीनां कुत्राप्यसमवायिकारणत्वेनाक्लृप्तत्वात्तदनङ्गीकरणमिति। न च ज्ञानादेरात्ममनःसंयोगेनैव निर्वाहेऽन्यत्र तत्कल्पनस्यानुभवविरुद्धत्वादत आह-आत्मविशेषगुणभिन्नेति।

निमित्तकारणस्य किं लक्षणम्—

तदुभयभिन्नं कारणं निमित्तकारणम् । यथा—तुरीवेमादिकं पटस्य ।

( न्यायबो० ) तदुभयभिन्नमिति । समवाय्यसमवायिकारणभिन्नमित्यर्थः ।

( पदकृ० ) तदुभयभिन्नं कारणम् निमित्तकारणम् इति । समवाय्यसमवायिकारणवारणाय 'तदुभयभिन्नम्' इति । विशेषादा ( १ ) वतिव्याप्तिवारणाय 'कारणम्' इति ।

( प्रतिवि० ) समवायिकारणभिन्नत्वे सत्यसमवायिकारणभिन्नत्वे च सति कारणत्वं निमित्तकारणत्वम् । तुरीवेमादिकं पटस्य न समवायिकारणं नाप्यसमवायिकारणं किन्तु निमित्तकारणम् । लक्षणे तदुभयभिन्नमिति पदं समवाय्यसमवायिकारणयोरतिव्याप्तिवारणाय । विशेषातिप्रसङ्गवारणाय कारणपदम् ।

करणस्य किं निष्कृष्टं लक्षणम्—

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ।

( न्यायबो० ) तदेतदिति । यदसाधारणम् इति । व्यापारवत्त्वे सति, इत्यपि पूरणीयम् । अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः, तन्तुकपालसंयोगयोरपि कार्यव्याप्य पटत्वाद्यवच्छिन्नं प्रति कारणत्वादसाधारणत्वमस्त्येवेति, अतस्तत्र करणत्ववारणाय व्यापारवत्त्वे सति, इति करणलक्षणे विशेषणं देयम् ।

व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम्। भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद्भ्रम्यादेर्दण्डव्यापारत्वम्। एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वम् (१) कपालसंयोगतन्तुसंयोगयोःकपालजन्यत्वे तन्तुजन्यत्वे सति तज्जन्यघटपटजनकत्वात्। करणलक्षणेऽसाधारणत्वविशेषणानुपादाने ईश्वराद्दृष्टादेरपि व्यापारवत्त्वे सति कारणत्वस्य सत्त्वात् तत्रातिव्याप्तिवारणाय 'असाधारण' इति पदोपादानम्।

(पदकृ०) तदेतदिति। यस्मात्कारणात् करणत्वघटकं कारणमुपदर्शितम् इति भावः। इति करणप्रपञ्चः।

(प्रतिवि०) समवायिकारणासमवायिकारणनिमित्तकारणान्यतमवत्त्वे सति व्यापारवदसाधारणकारणत्वं करणत्वलक्षणम्।

प्रत्यक्षप्रमाणस्य किं लक्षणम्—

## तत्र प्रत्यक्षज्ञानकरणं ( २ ) प्रत्यक्षम्।

(न्यायबो०) षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह-तत्रेति। प्रमाणभूतेषु प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं ( तत् ) प्रतिकारणव्यापारवदसाधारणम्। इन्द्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम्। आद्यसन्निकर्षा-

---

(१) समवायिकारणापेक्षया कपालसंयोगेन तन्तुसंयोगयोर्व्यापारत्वं घटपटरूपकार्यापेक्षया चासमवायिकारणत्वमत एकस्मिन् धर्मिणि धर्मद्वयसमावेशो न विरुद्ध्यते इति भावः।

(२) प्रत्यक्षशब्दोऽपि वृत्तिभेदेन ज्ञानपरःइन्द्रियपरो विषयपरश्चेति बोध्यम्।

तिरिक्तचतुर्विधसन्निकर्षाणां समवायघटितत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वं न सम्भवति,इतीन्द्रियमनः संयोगस्यैव षड्विधप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या।

(पदकृ०) तत्रेति । प्रमाणचतुष्टयमध्ये । दण्डादिसंयोगवारणाय 'ज्ञान' इति । अनुमानादिवारणाय 'प्रत्यक्ष' इति।

( प्रतिबि० ) प्रत्यक्षानुमित्युपमितिशब्दप्रमाणमध्ये, प्रत्यक्षज्ञानकारणत्वं प्रत्यक्षप्रमाणलक्षणम् । दण्डादावनुमित्यादौ चातिव्याप्तिवारणाय लक्षणे ज्ञानपदं प्रत्यक्षपदं च।

प्रत्यक्षज्ञानस्य प्रत्यक्षप्रमाया वा किं लक्षणमित्यस्योत्तरम्—

**ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् । इन्द्रियार्थसन्निकर्षजन्यं (१) ज्ञानं प्रत्यक्षम् । तद्द्विविधम्-निर्विकल्पकं सविकल्पकं चेति ।** 8-21-20

( न्यायबो० ) प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह-ज्ञानाकरणकमिति । क्षेपक(२)लक्षणमिदम् । ज्ञानं व्याप्तिज्ञानं सादृश्यज्ञान पदज्ञानं च तदेव करणं येषां ते ज्ञानकरणका अनुमित्युपमितिशब्दाः ज्ञानकरणकं, न भवतीति ज्ञानाकरणकं ( तत्त्वम् ) प्रत्यक्षलक्षणम् । प्रत्यक्षं इन्द्रियाणामेव करणत्वात्, न तु ज्ञानस्य करणत्वम् । इदं लक्षणमीश्वरप्रत्यक्ष-

---

( १ ) अत्र सन्निकर्षपरम्परा चेत्थम् । आत्मा मनसा युज्यते मन इन्द्रियेण इन्द्रियमर्थेन ततो घटादीनां प्रत्यक्षमिति ।

( २ ) प्रकृतग्रन्थाघटकमित्यर्थः ।

साधारणम् । ईश्वरप्रत्यक्षस्याजन्यत्वात् । अतो जन्यप्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेणेदम्–इन्द्रियार्थसन्निकर्षेति । जन्यप्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेणेदम् प्रत्यक्षं द्विधाविभजते–'निर्विकल्पकम्' इति।

( पदकृ० ) इन्द्रियार्थेति । इन्द्रियं 'चक्षुरादिकम्' अर्थो घटादिः, तयोः सन्निकर्षः संयोगादिः, तज्जन्यज्ञानं 'प्रत्यक्षम्' इत्यर्थः । सन्निकर्षध्वंसवारणाय 'ज्ञानम्' इति। अनुमित्यादि-वारणाय 'इन्द्रियार्थसन्निकर्ष' इति । ननु 'सोपनेत्रचक्षुषा कथं पदार्थग्रहणम चाक्षुष उपनेत्रनिरुद्धत्वेन पदार्थेन संनिकर्षाभा-वात्' कथं वा स्वच्छजाह्नवीसलिलावृतमत्स्यादेश्चक्षुषा ग्रह-णम् इति चेत् न स्वच्छद्रव्यस्य तेजोनिरोधकत्वाभावेन तदन्त-श्चक्षुःप्रवेशसम्भवात् । न च ईश्वरप्रत्यक्षेऽव्याप्तिः ( १ ) इति वाच्यम् । अत्र जन्यप्रत्यक्षस्यैव लक्षितत्वात् ।

( पतिवि० ) इन्द्रियाणां चक्षुरादीनामर्थेन पदार्थेन घटा-दिना सन्निकर्षात् संयोगादिसम्बन्धात् यज्ज्ञानं जायते तत्प्र-त्यक्षम्।इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षप्रमाणल-क्षणम् । अनुमानादौ घटादौ चातिव्याप्तिवारणाय विशेष्यवि-शेषणदलम् । निर्विकल्पकसविकल्पकभेदात् प्रत्यक्षं द्विविधम् । ईश्वरप्रत्यक्षसाधारणं तु ज्ञानाकरणकंज्ञानं प्रत्यक्षमिति लक्षणं बोध्यम् ।

**निर्विकल्पकस्य किं लक्षणम्—**

## तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ।

---

( १ ) तस्य चक्षुरादीन्द्रियशून्यत्वादिति भावः ।

( न्यायबो० ) निष्प्रकारकमिति । 'प्रकारशून्यत्वमेव निर्विकल्पकत्वम्' इत्यर्थः । निर्विकल्पके चतुर्थी विषयता स्वीक्रियते न तु त्रिविध ( १ ) विषयतामध्ये कोऽपि तत्रास्ति अतो 'विषयताशून्यज्ञानत्वम्, इत्यपि लक्षणं सम्भवति ।

( पदकृ० ) तत्र निष्प्रकारकमिति । सविकल्पकेऽतिव्याप्तिवारणाय 'निष्प्रकारकम्' इति । प्रकारतावारणाय 'ज्ञानम्, इति ।

( प्रतिवि० ) विशेष्यविशेषणाद्यनवगाहिज्ञानत्वं निर्विकल्पकलक्षणम् । विशेष्यताविशेषणतासंसर्गताख्यविषयताशून्यत्वमिति यावत् । सविकल्पके प्रकारे चातिव्याप्तिवारणाय क्रमेण निर्विकल्पकमिति ज्ञानमिति च पदम् ।

सविकल्पकस्य लक्षणं निर्दिशेय इति प्रश्ने उत्तरम्—

**सप्रकारकं ज्ञानं सविकल्पकम् । यथा डित्थोऽयम्, ब्राह्मणोऽयम्, श्यामोऽयम्, इति ।**

( न्यायबो० ) सप्रकारकमिति । विषयताया ज्ञाननिरूपितत्वात् ज्ञानस्य विषयतानिरूपकत्वेन, प्रकारता ( २ ) निरूपकज्ञानत्वं सविकल्पकस्य लक्षणम् । उदाहरणम्—यथेति । डित्थत्वावच्छिन्नविशेष्यता ( ३ ) निरूपितडित्थत्वप्रकारताशालिज्ञानं ब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः ।

( १ ) विषयतायास्त्रिविधत्वं च विशेष्यताख्यप्रकारताख्यसंसर्गताख्यविषयताभेदेनेति बोध्यम् ।

( २ ) प्रकारता च ज्ञानीयविषयताविशेषः ।

( ३ ) इत्यपि ज्ञानीयविषयताविशेष इति बोध्यम् ।

( पदकृ० ) सप्रकारेति । घटादिवारणाय 'ज्ञानम्, इति निर्विकल्पवारणाय 'सप्रकारकम्, इति ।

( प्रतिवि० ) नामजात्यादिविशेष्यविशेषणाद्यवगाहिज्ञानत्वं सविकल्पकलक्षणम् । निर्विकल्पके घटत्वादौ चातिव्याप्तिवारणाय सप्रकारकमिति ज्ञानमिति च लक्षणे दत्तम् । डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमित्यादिसविकल्पकोदाहरणम् । अत्र सर्वत्र इदंत्वावच्छिन्नविशेष्यतानिरूपितडित्थत्वप्रकारताशालिज्ञानं, ब्राह्मणत्वप्रकारताशालिज्ञानं, श्यामत्वप्रकारताशालिज्ञानं च वर्तत इति लक्षणसमन्वयः ।

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः— संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति ।**

( न्यायबो० ) चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान्षड्विधसंनिकर्षान्विभजते—'संयोगः, इत्यादिना । 'द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगः कारणम् । द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुः संयुक्तसमवायस्य हेतुत्वम् । द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवेतसमवायस्य हेतुत्वम् । द्रव्यग्राहकाणीन्द्रियाणि चक्षुस्त्वङ्मनांसि त्रीण्येव । अन्यानि घ्राणरसनाश्रोत्राणि तु गुणग्राहकाणि । अतस्त्वगिन्द्रियस्थले द्रव्यवृत्ति-

लौकिकविषयतासम्बन्धेन त्वक्त्वावच्छिन्नं प्रति त्वक्संयोगस्य हेतुता। द्रव्यसमवेतावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य हेतुता द्रव्यसमवेतसमवेतोष्णत्वशीतत्वादिजातिस्पर्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता, एवम् आत्मरूपद्रव्यमानसप्रत्यक्षे मनःसंयोगस्य हेतुता, आत्मसमवेतसुखादिप्रत्यक्षेमनःसंयुक्तसमवायस्य हेतुता, आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता। रसनाघ्राणयोस्तु रसगन्धतद्गतजातिग्राहकत्वेन द्वितीयतृतीययोः संनिकर्षयोरेव तत्र हेतुता वाच्या। श्रवणेन्द्रियस्याकाशरूपत्वेन शब्दस्याकाशगुणत्वेन, श्रवणेन्द्रियेण समं शब्दस्य समवायः संनिकर्षः। शब्दवृत्तिशब्दत्वकत्वखत्वादिजातिविषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता। अभावप्रत्यक्षे विशेषणविशेष्यभावो नाम विशेषणतासंनिकर्षः। पञ्चविधसन्निकर्षोपरि विशेषणता योजनीया। तथाहि द्रव्याधिकरणकाभावप्रत्यक्षे संयुक्तविशेषणता द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता। द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवतसमवेतविशेषणता। संयोगस्थाने संयुक्तत्वं घटयित्वा समवायस्थाने समवेतत्वपदं घटयित्वा अभावप्रत्यक्षस्थले निर्वाह्यम्। यथा घटद्रव्यसमवेतं घटत्वं पृथ्वीत्वादिरूपादिकं च। तत्र नीलादौ पीतत्वाभावःघटत्वादिजातौ पटत्वाभावश्च वर्तते। स चाभावः संयुक्तसमवेतविशेषणता संनिकर्षेण गृह्यते। एवं नीलत्वादिजातौ पीतत्वाभावोऽपीन्द्रियसंयुक्तसमवेतसमवेतविशेषणतासंनिकर्षेण गृह्यते। पटसमवेतं नीलं, तत्समवेतं नीलत्वं, तद्विशेषणता पीतत्वाभावे वतते इति संक्षेपः।

( पदकृ० ) प्रत्यक्षेति । तच्च प्रत्यक्षं षड्विधम् घ्राणजरासनचाक्षुष—श्रौत्र-त्वाच-मानस-भेदात् । ननु 'प्रत्यक्षकारणीभूतेन्द्रियसंनिकर्षप्रत्यक्षसामानाधिकरण्यघटकः संनिकर्षः कः, इत्यपेक्षायां विभज्य दर्शयति—प्रत्यक्षेति ।

'लौकिकप्रत्यक्ष इत्यर्थः ।

(प्रतिवि०, घ्राणजरासनचाक्षुषश्रौत्रत्वाचमानसरूपप्रत्यक्षज्ञानकारणं चक्षुरादीन्द्रियाणां घटादिद्रव्याणां च सम्बन्धःषड्विधः। ते च भेदाःसंयोगसम्बन्धः संयुक्तसमवायसम्बन्धःसंयुक्तसमवेतसमवायसम्बन्धः समवायसम्बन्धः समवेतसमवायसम्बन्धः विशेषणविशेष्यभावसम्बन्धश्चेत्येवं भेदात् षड्विधो भवति। द्रव्यवृत्तिलौकिकचाक्षुषप्रत्यक्षे चक्षुःसंयोगःकारणम्। द्रव्यसमवेतलौकिकचाक्षुषप्रत्यक्षे चक्षुःसंयुक्तसमवायःकारणम् । द्रव्यसमवेतलौकिकचाक्षुषप्रत्यक्षे चक्षुःसंयुक्तसमवेतसमवायः कारणम् । एवं त्वाचप्रत्यक्षे त्वक्संयोगः कारणम् । त्वक्संयुक्तसमवेतप्रत्यक्षे त्वक्संयुक्तसमवायः कारणम् । त्वक्संयुक्तसमवेतसमवेतप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् । मानसप्रत्यक्षे मनःसंयोगः,मनःसंयुक्तसमवेतप्रत्यक्षे मनःसंयुक्तसमवायः, मनःसंयुक्तसमवेतसमवेतप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः, द्रव्यसमवेतशब्दलौकिकप्रत्यक्षे समवायः कारणम् । द्रव्यसमवेतशब्दसमवेतलौकिकप्रत्यक्षे समवेतसमवायःकारणम्। चक्षुराभावप्रत्यक्षे विशेषणविशेष्यभावो नाम विशेषणताहेतुः ।

द्रव्यप्रत्यक्षे कः सन्निकर्षः—

**चक्षुषा घटप्रत्यक्षजनने संयोगः संनिकर्षः ।**

( पद्कृ० ) संयोगमुदाहरति—चक्षुषेति । तथा च द्रव्यचाक्षुषत्वाचमानसेषु संयोग एव संनिकर्षः, इति भावः ।

( प्रतिवि० ) आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियं वस्तुनेति क्रमसत्त्वात् चक्षुरिन्द्रियेण घटादिपदार्थप्रत्यक्षे जननीये संयोग एव सम्बन्धः । एवञ्च द्रव्यस्य चाक्षुषत्वाचमानसप्रत्यक्षेषु संयोग एव सम्बन्धः ।

घटरूपप्रत्यक्षे कः सन्निकर्षः—

**घटरूपप्रत्यक्षजनने संयुक्तसमवायः संनिकर्षः । चक्षुःसंयुक्ते घटे रूपस्य समवायात् ।**

( पद्कृ० ) घटरूपेति । 'चाक्षुषा' इत्यनुषज्यते । तथा च द्रव्यसमवेतचाक्षुषरासनघ्राणस्पार्शनमानसेषु संयुक्तसमवाय एव संनिकर्ष इत्यर्थः ।

( प्रतिवि० ) चक्षुरिन्द्रियेण घटगतनीलादिरूपप्रत्यक्षे जननीये चक्षुःसंयुक्तसमवायो हेतुः । चक्षुःसंयोगवति घटे रूपस्य गुणत्वेन गुणगुणिनोः समवायसम्बन्धस्य च नियतत्वेन संयुक्तसमवायसन्निकर्षस्य सत्त्वात् । एवं च द्रव्यसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसप्रत्यक्षेषु संयुक्तसमवाय एव सम्बन्धः ।

रूपत्वस्य प्रत्यक्षं केनेन्द्रियेण कश्च संनिकर्षः—

**रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः संनिकर्षः । चक्षुःसंयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात् ।**

( पदकृ० ) रूपत्वेति । रूपत्वात्मकं यत्सामान्यम्, तत्प्रत्यक्षमित्यर्थः अत्रापि 'चक्षुषा'इत्यनुषज्यते । तथा च 'द्रव्यसमवेतसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसेषु संयुक्तसमवेतसमवाय एव सन्निकर्ष इति भावः । अथ'द्रव्यसमवेतप्रत्यक्षेऽपि संयुक्तसमवाय एव संनिकर्षोऽस्तु, इति चेत् न तत् ईश्वरा ( १ ) त्मादेरनध्यक्षत्वप्रसंगात् ।

( प्रतिवि० ) चक्षुषा रूपत्वात्मकजातिप्रत्यक्षे जननीये संयुक्तसमवेतसमवायः सन्निकर्षो हेतुः । चक्षुः संयोगवति घटे गुणगुणिनोः समवाय इति नियमेन रूपस्य, रूपे च जातिव्यक्त्योः समवाय इति नियमेन रूपत्वस्य समवायात् एवञ्च द्रव्यसमवेतसमवेतचाक्षुषरासनघ्राणजस्पार्शनमानसप्रत्यक्षेषु संयुक्तसमवेतसमवाय एव सम्बन्धः ।

शब्दस्य कथं प्रत्यक्षम् कश्च संनिकर्षः—

**श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः । कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात् । शब्दस्याकाशगुणत्वात् । गुणगुणिनोश्च समवायात् ।**

( पदकृ० ) समवायसंनिकर्षमुदाहरति—श्रोत्रेणेति । 'जननीये' इति शेषः । ननु 'श्रोत्रशब्दयोः कथं समवायः,इत्यपेक्षमाणं प्रति तमुपपाद्य दर्शयति—कर्णेति । अथ समवायस्य नित्यत्वेन

---

( १ ) चक्षुःसंयुक्तकपालतन्तुसमवेतत्वेन घटपटादीनां प्रत्यक्षं भविष्यत्येवेति शङ्काभिप्रायः । जीवात्मपरमात्मनोश्च निरवयवत्वेन स्वावयवसमवेतत्वाभावात् तादृशसंबन्धेन प्रत्यक्षं न स्यादित्युत्तरम् । आदिपदेन परमाणवो ग्राह्या, योगजधर्मेणातीन्द्रियाणामपि प्रत्यक्षत्वस्वीकारादिति भावः ।

शब्दप्रत्यक्षे को व्यापारः, इति चेत् 'शब्दः श्रोत्रमनः संयोगो वा' इति गृहाण।

(प्रतिवि०) श्रोत्रेन्द्रियेण शब्दसाक्षात्कारे जननीये समवायसम्बन्धो हेतुः। कर्णशष्कुल्यवच्छिन्नाकाशस्य श्रोत्ररूपत्वेन शब्दस्य चाकाशगुणत्वेन गुणगुणिनोश्च समवाय इति नियमात्।

शब्दत्वस्य प्रत्यक्षं केनेन्द्रियेण कश्च संनिकर्षः—

**शब्दत्वसाक्षात्कारे समवेतसमवायः संनिकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्।**

( पदकृ० ) शब्दत्वेति। श्रोत्रेण, जननीये इत्यनुकर्षशेषौ।

( प्रतिवि० ) श्रोत्रेन्द्रियेण शब्दत्वसाक्षात्कारे जननीये समवेतसमवायो हेतुः। गुणगुणिन्यायेन श्रोत्रसमवेते शब्दे जातिव्यक्त्योः समवाय इति नियमेन शब्दत्वस्य समवायात्।

अभावस्य कथम् प्रत्यक्षम् संनिकर्षश्च तत्र कः—

**अभावप्रत्यक्षे विशेषणविशेष्यभावः संनिकर्षः ( १ )। घटाभाववद् भूतलम्, इत्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्।**

---

( १ ) अत्र लौकिकसन्निकर्ष इवालौकिकसन्निकर्षोऽपि त्रिविधः-शास्त्रीयनिरूपितः स च सामान्यलक्षणो ज्ञानलक्षणो योगजधर्मरूपश्चेति, तत्राद्य इन्द्रियसम्बद्धविशेष्यके ज्ञाने प्रकारीभूतो घटत्वादिः इन्द्रियसम्बद्धविशेष्यके घटोऽयमिति लौकिकप्रत्यक्षे घटत्वं प्रकारः तदनन्तरं तत्सन्निकर्षेण सर्वं घटा घटवन्त इत्यलौकिकप्रत्यक्षम्। द्वितीयश्च सुरभिचन्दनखण्डमित्यादौ अत्र चन्दनखण्डांशे लौकिकसौरभांशे चालौकिकसौरभस्मरणरूपज्ञानमेव सन्निकर्षः सौरभस्य चाक्षुषत्वासम्भवात्। तृतीयश्च युक्तयुञ्जानभेदेन योगिनां द्वैविध्येन द्विविधः। तत्र युक्तस्य योगिनः सर्वदा यावत्पदार्थभानम्। युञ्जानस्य च चिन्तासहकारेण कालविशेष एवेति भावः।

( पदकृ० ) विशेषणेति । विशेषणभावो विशेष्यभाव इन्द्रियसम्बद्धविशेषणत्वम्, इन्द्रियसम्बद्धविशेष्यत्वम्, इति यावत् । विशेषणाभावसन्निकर्षमुपपाद्य दर्शयति घटाभाववदिति । 'इह भूतले घटो नास्ति' इत्यादौ विशेष्यतासन्निकर्षोऽवसेयः । सप्तम्यन्तस्य विशेषणत्वात् ।

( प्रतिवि० ) यदि स्यात्तर्ह्युपलभ्येत नोपलभ्यत अतो नास्तीत्येवं रूपाभावप्रत्यक्षे जननीये विशेषणविशेष्यभावः सम्बन्धः । घटाभाववद्भूतलमित्यत्र चक्षुःसंयोगवति भूतले घटाभावस्य विशेषणतया वर्तमानत्वात् ।

एतत्सन्निकर्षषट्कं लौकिकसन्निकर्षमित्युच्यते । अलौकिकोऽपि त्रिविधः सन्निकर्षः शास्त्रे निरूपितः । स च सामान्यलक्षणो ज्ञानलक्षणो योगजश्च । तेष्वाद्य इन्द्रियसम्बद्धविशेष्यज्ञाने प्रकारीभूतः । इन्द्रियसम्बद्धघटात्मके विशेष्ये घटत्वस्य प्रकारत्वेन घटत्वसामान्येन सर्वे घटा घटत्ववन्त इत्यलौकिकसन्निकर्षेण सामान्यतः सर्वघटज्ञानजननात् । द्वितीयोदाहरणं सुरभिचन्दनखण्डम् । अत्र चन्दनखण्डांशे लौकिकसन्निकर्षत्वेऽपि सौरभस्याचाक्षुषत्वात् तदंशे सौरभस्मरणज्ञानात्मक एव सन्निकर्षः । योगजधर्मबलेनातीतादिपदार्थज्ञानं योगजसन्निकर्षेण भवति ।

प्रत्यक्षस्य निष्कृष्टं लक्षणं किम्—

## एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम् ।

(पदकृ०) प्रत्यक्षप्रमाणमुपसंहरति । उपदर्शितक्रमेण इत्यर्थः ।

( प्रतिवि० ) निरुक्तप्रकारेण संयोगादिषड्विधसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । तस्यासाधारणं कारणमिन्द्रियम् । अत

इन्द्रियम् ऐन्द्रियकं ज्ञानं प्रत्यक्षमिति सिद्धम्। तथाच संयोगादिषट्कसन्निकर्षजन्यज्ञानासाधारणकारणकेन्द्रियजन्यज्ञानत्वं प्रत्यक्षलक्षणं सिद्धम्।

**तत्करणमिन्द्रियम्। तस्मात् 'इन्द्रियं प्रत्यक्षप्रमाणम्' इति सिद्धम्।**

(पदकृ०) ननु सिद्धान्ते प्रत्यक्षज्ञानकरणमिन्द्रियार्थसन्निकर्षः किं नस्यात् इति चेन्न इत्याह—तत्करणमिति। प्रमाणं निगदति—तस्मादिति। प्रत्यक्षप्रमाकरणत्वादित्यर्थः। सिद्धमिति। न्यायसिद्धान्ते सिद्धमित्यर्थः।

इति प्रत्यक्षपरिच्छेदः समाप्तः।

अनुमानस्य किं लक्षणम्—

**अनु (१) मितिकरणमनुमानम्।**

(न्यायबो०) अनुमानं लक्षयति अनुमितीति। अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः, अनुमितिः फलं, कार्यमित्यर्थः। परामर्शस्य व्याप्तिज्ञानजन्यत्वाद् व्याप्तिज्ञानजन्यानुमितिजनकत्वाच्च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारलक्षणमुपपन्नम्। अनुमितिकरणत्वमनुमानस्य लक्षणम्। अनुमानञ्च व्याप्तिज्ञानम् एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रति असाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम्।

---

(१) प्रत्यक्षानुमानयोः परस्परमुपजीव्योपजीवकभावत्वेन प्रत्यक्षानन्तरमनुमाननिरूपणम्। उपजीव्यन्ते जन्यतेऽनेनेति उपजीव्यं कारणम्। तथा च कार्यकारणभावसंगत्या प्रत्यक्षानन्तरमनुमाननिरूपणमिति भावः। संगतिश्च षोढा, तथाहि-प्रसंगश्च उपोद्घातो हेतुताऽवसरस्तथा, निर्वाहकैककार्यैक्यषोढा संगतिरिष्यते, इति।

(पद्कृ०) प्रत्यक्षानुमानयोःकार्यकारणभावसंगतिमभिप्रेत्य प्रत्यक्षानन्तरमनुमानं निरूपयति–अनुमितीति। अनुमितेः करणम् अनुमानम् इत्यर्थः। तच्च लिङ्गपरामर्श एव, इति निवेदयिष्यते। कुठारादावतिव्याप्तिवारणाय 'अनु' (१) इति।

( प्रतिवि० ) अनुमितौ करणमिति व्युत्पत्त्याऽनुमितिकरणत्वमनुमानस्य लक्षणम्। करणमनुमानमित्युक्तौ दण्डादावतिव्याप्तिरत–अनुमितीति। प्रत्यक्षेऽतिव्याप्तिवारणायान्विति। एतेन लिङ्गपरामर्शोऽनुमानमित्युक्तम्। तदेतदग्रे स्फुटीभविष्यति।

अनुमितेः किं लक्षणम्—

## परामर्शजन्यं ज्ञानमनुमितिः।

( न्यायबो० ) परामर्शजन्यमिति। 'परामर्शजन्यत्वे सति, इति सति सप्तम्या विशिष्टत्वमर्थः परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम्। तत्र ज्ञानत्वमात्रोपादाने प्रत्यक्षादावतिव्याप्तिः,अतस्तद्वारणाय 'परामर्शजन्यत्वे सति' इति विशेषणोपादानम्। विशेषणमात्रोक्तौ तु तत्ध्वंसेऽतिव्याप्तिः अतो ज्ञानत्वोपादानम्।

( पद्कृ० ) ननु अनुमितेरेव दुर्निरूप्यत्वात् तद्घटितमनुमानमपि दुर्निरूपम् इत्यत आह– परामर्शेति। प्रत्यक्षादावतिव्याप्तिवारणाय 'परामर्शजन्यम्' इति। परामर्शध्वंसवारणाय

---

( १ ) मानं-मितिः, डुमिञ् प्रक्षेपणे इत्यस्माद्धातोः स्त्रियां भावे क्तिन् अनुप्रत्यक्षादितः पश्चान्मीयते इत्यनुमितिः। एवं हि करणव्युत्पत्त्याऽनुमानशब्दो बोध्य इति भावः।

'ज्ञानम्' इति। परामर्शप्रत्यक्षवारणाय (१) 'हेतुविषयकम्' इत्यपि बोध्यम्।

(प्रतिवि०) परामर्शजन्यत्वे सति ज्ञानत्वमनुमितिलक्षणम्। प्रत्यक्षादौ परामर्शध्वंसे चातिव्याप्तिवारणाय परामर्शजन्यत्वं ज्ञानत्वं च क्रमेण लक्षणघटकम्। वस्तुतस्तु सिषाधयिषा विरहविशिष्टसिद्ध्यभावसहकृतपरामर्शविशिष्टज्ञानत्वमनुमितिलक्षणम्। अत एव स्थाणुर्वा पुरुषो वेति संशयोत्तरं पुरुष एवेति प्रत्यक्षे नातिव्याप्तिः।

परामर्शस्य किं लक्षणं किं च तत्स्वरूपमिति—

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा—वह्निव्याप्यधूमवानयं पर्वतः इति ज्ञानं परामर्शः। तज्जन्यम् 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः।**

(न्यायबो०) व्याप्तिविशिष्टेति 'व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानं च' इति कर्मधारये विशिष्टपदस्य प्रकारकपरत्वात् 'पक्षधर्मताज्ञानम्' इत्यत्र षष्ठ्या विषयत्वबोधनात् धर्मतापदस्य सम्बन्धार्थकत्वाच्च कर्मधारयसमासे समस्यमानपदार्थयोरभेदसंसर्गलाभेन च व्याप्तिप्रकारकाभिन्नं यत् पक्षसम्बन्धविषयकं ज्ञानं तत् परामर्श इति लभ्यते। एवं सति 'धूमो वह्निव्याप्यः घटवान् पर्वतः' इति समूहालम्बने परामर्शलक्षणं गतम्' तद्वारणाय पक्षविशेष्यता निरूपिता या हेतुनिष्ठप्रकारता तन्निरूपिता या व्याप्तिनिष्ठप्रकारता तच्छालिज्ञानं परामर्शः इति निष्कर्षः।

(१) विषयिताज्ञानं वर्तते विषयता च विषये विषयतासम्बन्धेन वस्तुमात्रज्ञाने, विषयतासम्बन्धेन च ज्ञानमत्र वस्तुनि वर्तते।

एतादृशपरामर्शजन्यत्वे सति ज्ञानत्वम् अनुमितेर्लक्षणम्। अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम् 'पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नवह्निविधेयताकानुमितित्वावच्छिन्नं प्रति वह्निव्याप्तिप्रकारता निरूपिता या धूमवत्त्वावच्छिन्ना प्रकारता, तन्निरूपिता या पर्व्वतत्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयः कारणम्' इति। स च निर्णयः वह्निव्याप्यधूमवान् पर्वतः, इत्याकारकः।

( पदकृ० ) व्याप्तिविशिष्टेति। 'विषयिता ( १ ) सम्बन्धेन व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः इत्यर्थः। घटादिज्ञानवारणाय 'पक्षधर्मता' इति। 'धूमवान् पर्वतः' इति ज्ञानवारणाय 'व्याप्तिविशिष्ट' इति। तदिति। परामर्शजन्यम्, इत्यर्थः।

( प्रतिवि० ) व्याप्तिविशिष्टं यत्पक्षधर्मताज्ञानं स परामर्शः। विषयितासम्बन्धेन व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वं परामर्शलक्षणम्। धूमवान् पर्वत इति ज्ञानेऽतिव्याप्तिवारणाय व्याप्तिवारणाय व्याप्तिविशिष्ट इति। घटाद्यावतिव्याप्तिवारणाय पक्षधर्मतेति। वह्निव्याप्यधूमवान् पर्वत इति ज्ञानं परामर्श इत्युच्यते। व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वे सति ज्ञानत्वमनुमितिलक्षणम्। पर्वतो वह्निमानिति ज्ञानमनुमितिः।

---

( १ ) अयम्भावः वह्निव्याप्यधूमवान् पर्वत इत्याकारकज्ञानविषयकज्ञानवानहमित्यत्र अनुव्यवसायात्मकः द्वितीयज्ञानस्य पूर्वपरामर्शरूपज्ञानजन्यत्वात् व्यवसायस्यानुव्यवसाये विषयतासम्बन्धेन कारणत्वनियमादतो हेत्वविषयकेति साधूक्तम्।

व्याप्तेः किं लक्षणम्—

'यत्र यत्र धूमस्तत्र तत्र वह्निः' इति साहचर्यनियमो व्याप्तिः।

( न्यायबो० ) यत्र यत्रेति। यत्र यत्र पदे वीप्सावशाद्धर्माधिकरणे यावति वह्निमत्त्वलाभात् यावत्पदमहिम्ना धूमव्यापकत्वं वह्नौ लब्धम् तदेव स्पष्टतया साहचर्यनियम इति। एतदर्थस्तु 'नियतसाहचर्यव्याप्ति' इति नियतत्वम्। साहचर्यं नाम सामानाधिकरण्यम्, तथा च धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः। अत्र धूमव्यापकत्वं नाम धूमसामानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। तादृशधर्मो वह्नौ वह्नित्वम्। तथाहि धूमाधिकरणे पर्वतमहानसादौ वर्तमानोऽभावः घटत्वावच्छिन्नप्रतियोगिताकाभावो न तु वह्नित्वावच्छिन्नप्रतियोगिताकोऽभावः। कुतः पर्वतादौ वह्नेः सत्त्वात्। एवं सति धूमाधिकरणे पर्वतादौ वर्तमानस्य घटाभावस्य प्रतियोगितावच्छेदकत्वं घटत्वम्, पटाभावस्य प्रतियोगितावच्छेदकं पटत्वम्, अनवच्छेदकं वह्नित्वं तादृशं वह्नित्वं वह्नौ वर्तते। अतो धूमव्यापकत्वं वह्नौ वर्तते, ( तस्याधिकरणे पर्वतादौ वृत्तित्वं धूमे वर्तते, ) इति। इयमन्वयव्याप्तिः सिद्धा तदनुसारेण पूर्वपक्षीयव्याप्तिस्तु 'साध्याभाववदवृत्तित्वम्—साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावाधिकरणनिरूपितं यद्धेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वम् तादृशवृत्तित्वावच्छिन्नप्रतियोगिताकोभा-

योऽव्याप्तिः। तच्च केवलान्वयिव्याप्तम्' इति सिद्धान्तानुसारेण लक्षणसमन्वयः।

( पदकृ० ) यत्र यत्रेति—यत्र यत्र धूमस्तत्रतत्राग्निः। इति व्याप्तेरभिनयः (१)। तत्र 'साहचर्यनियमः'। इति लक्षणम्। 'सहचरतीति सहचरःतस्य भावः साहचर्यं सामानाधिकरण्यम्' इति यावत्। तस्य नियमो व्याप्तिरित्यर्थः। स चाव्यभिचरितत्वम्। तच्च व्यभिचाराभावःव्यभिचारश्च साध्याभाववद्वृत्तित्वम् महानसं वह्निमत् धूमात्'इत्यादौ'साध्यो वह्निःतदाभाववज्जलह्रदादि तद्वृत्तित्वं प्रकृते हेतुभूते'धूम'इति कृत्वा लक्षणसमन्वयः। 'धूमवान् वह्नेः' इत्यादौ साध्यो धूमो, तदभाववत् अयोगोलकम्, तद्वृत्तित्वमेव वह्न्यादौ इति नातिव्याप्तिः।

( प्रतिवि० ) सह चरतीति सहचरस्तस्य भावः साहचर्यं तस्य नियमः। नियतसाहचर्यमित्यर्थः। साहचर्यं सामानाधिकरण्यम्। नियतत्वं व्यापकत्वम्। तथा च हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिलक्षणम्। हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यमिति यावत्। पर्वतो वह्निमान् धूमादित्यत्र धूमाधिकरणमहानसादिवृत्यन्ताभाववज्जलाप्रतियोगिसामानाधिकरण्यं वह्निधूमयोरिति लक्षणसमन्वयः। यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमरूपव्याप्तेरभिनयः।

पक्षतालक्षणं निदर्शयति—

**व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता।**

---

(१) अभिनयश्चाङ्गलिनिर्देशेन पदार्थप्रकाशनमिति।

( पदकृ० ) ननु ज्ञातेयं व्याप्तिः 'पक्षधर्मताज्ञानम्, इत्यत्र का नाम पक्षधर्मता' इत्यपेक्षमाणं प्रति तत्स्वरूपं निरूपयति-व्याप्यस्येति। व्याप्यो नाम व्याप्त्याश्रयः स च धूमादिरेव, तस्य पर्वतादिवृत्तित्वं पक्षधर्मता इत्यर्थः।

( प्रतिवि० ) व्याप्यो नाम व्याप्त्याश्रयो धूमादिस्तस्य पर्वतादिवृत्तित्वं पक्षधर्मतेत्यर्थः।

अनुमानं कतिविधम्—

**अनुमानं द्विविधम्-स्वार्थं परार्थं च।**

( पदकृ० ) अथ 'कथमनुमानमनुमितिकरणम् कथं वा तस्मादनुमितिजनिः इति जिज्ञासमानं प्रति, लाघवादनुमान-विभागमुखेनैव बुबोधयिषुरनुमानं विभजते--अनुमानमिति। द्वैविध्यं दर्शयति-स्वार्थं चेति।

( प्रतिवि० ) स्वार्थपरार्थभेदेनानुमानं द्विविधम्।

स्वार्थानुमानस्वरूपं ब्रूत—

**तत्र स्वार्थः स्वानुमितिहेतुः। तथाहि स्वयमेव भूयोदर्शनेन 'यत्र यत्र धूमस्तत्र तत्राग्निः' इति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति (१) 'यत्र धूमस्तत्राग्निः' इति,**

---

( १ ) एकसम्बन्धिज्ञातस्यापरसम्बन्धिस्मारकनियमादिति भावः।

(१) तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते अयमेव लिङ्गपरामर्श इत्युच्यते। 'तस्मात् पर्वतो वह्निमान्' इति ज्ञानमनुमितिरुत्पद्यते। तदेतत्स्वार्थानुमानम्।

(न्यायबो०) स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम्।

(पदकृ०) स्वार्थमिति। स्वस्यार्थः प्रयोजनं यस्मादिति तत् स्वार्थमिति समासः। स्वप्रयोजनं च स्वस्यानुमेयप्रतिपत्तिः एवं परार्थम् इत्यस्यापि। अयमिति। व्याप्तिबलेन लीनमर्थं गमयति, इति लिङ्गम्। तच्च धूमादिः तस्य परामर्शो ज्ञानविशेष इत्यर्थः। तस्मादिति। लिङ्गपरामर्शादित्यर्थः। स्वार्थानुमानमुपसंहरति-तदेतदिति। यस्मादिदं स्वप्रतिपत्तिहेतुःतस्मादेतत्स्वार्थानुमानमित्यर्थः।

(प्रतिवि०) स्वस्यानुमातुरर्थः प्रयोजनं साध्यसन्देहनिवृत्त्यात्मकं यस्मादिति व्युत्पत्तेः स्वीयसंशयनिवर्तकानुमितित्वं स्वार्थानुमानलक्षणम्। प्रतिज्ञादिपञ्चावयवाप्रयोज्यानुमितित्वमिति तु सुगमम्। तथाहि यत्रानुमाता स्वयमेव धूमाग्न्योः साधनसाध्यरूपयोर्भूयः साहचर्यदर्शनेन यत्र यत्र धूमस्तत्र तत्र वह्निरिति पाकशालायां गोष्ठादिषु वा गृहीतव्याप्तिःकार्यवशात्पर्वतसन्निधिप्राप्तः पर्वतेऽग्निरस्ति न वेति सन्दिग्धः तत्राविच्छिन्नां धूमरेखां विलोक्य यत्र यत्र धूमस्तत्र तत्राग्निरिति

(१) न च यावद्वह्निधूमयोरसन्निकर्षात्कथं व्याप्तिग्रह इति वाच्यम् वह्नित्वधूमत्वरूपसामान्यलक्षणप्रत्यासत्त्या निखिलवह्निधूमज्ञानासंभवात्।

व्याप्तिं स्मरति। ततश्च वह्निव्याप्यधूमवानयं पर्वत इति लिङ्गपरामर्शरूपं ज्ञानं तस्योत्पद्यते। लिङ्गपरामर्शाच्च पर्वतोऽग्निमानित्यनुमित्यात्मकं ज्ञानं भवति। तदेतत्स्वज्ञानहेतुत्वार्थानुमानपदेन व्यवह्रियते।

परार्थानुमानस्वरूपं निदर्शयति—

यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम्। यथा 'पर्वतो अग्निमान्' धूमवत्त्वात्। यो यो धूमवान्, स सोऽग्निमान् यथा महानसम्, तथा चायम्, तस्मात्तथा इति। अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते।

(न्यायबो०) न्यायप्रयोज्या (१) नुमाने परार्थानुमानम्। न्यायत्वं च प्रतिज्ञादिपञ्चकावयवत्वं समुदायत्वम् (२)। अवयवत्वं प्रतिज्ञाद्यन्यतमत्वम्।

(पदकृ०) क्रमप्राप्तं परार्थानुमानमाह—यदिति। यत् पञ्चावयववाक्यं प्रयुज्यते तत् परार्थानुमानम् इति सम्बन्धः। पञ्चावयवेति। अवयवत्वं नाम द्रव्यसमवायिकारणत्वम्, प्रतिज्ञादिषु तदसम्भवात्कथमेतेऽवयवाः स्युः इति चेत्। अनु-

(१) प्रयोज्यत्वं च साक्षात्परम्परया वा जन्यत्वमिति बोध्यम्।

(२) प्रतिज्ञाहेत्वोः स्वार्थानुमानेपि सत्त्वेन तद्वारणाय पञ्चकसमुदायत्वमिति।

मानवाक्यैकदेशत्वात्तु अवयवाः इत्युपचर्यन्ते इति गृहाण। नन्वेवमपि पञ्चावयववाक्यस्यानुमानत्वमेव न विचारसहम्। तस्य लिङ्गपरामर्शत्वाभावात्। इति चेत्। मैवम्। लिङ्गपरामर्शप्रयोजकं (१) लिङ्गप्रतिपादकत्वेन 'अनुमानम्' इत्युपचार-(२) मात्रत्वात्। तदुदाहरति यथेति। तथा चायमिति। अयं च पर्वतः तथा वह्निव्याप्यधूमवान् इत्यर्थः। तस्मात्तथेति। वह्निव्याप्यधूमवत्त्वात् वह्निमान्, इत्यर्थः। अनेनेति। पञ्चावयववाक्येन इत्यर्थः।

( प्रतिवि० ) यत्र स्वयं प्रमाता धूमाद्धेतोः स्वयमग्निमनुमाय परस्याप्यनुमानज्ञानाय यत् प्रतिज्ञादिपञ्चावयवयुक्तं वाक्यं प्रयुङ्क्ते तत् परार्थानुमानम्। साक्षात्परम्परया वा प्रतिज्ञादिपञ्चावयवप्रयोज्यानुमितित्वं परार्थानुमानलक्षणम्। पर्वतो वह्निमान् धूमवत्त्वात् यो यो धूमवान् स स वह्निमान् यथा रसवती ( महानसं ) अयं च पर्वतो वह्निव्याप्यधूमवान् तस्मात् वह्निव्याप्यधूमवत्त्वात् वह्निमानिति परार्थानुमानप्रयोगः।

न्यायावयवाः पञ्चावयवा वा के—

**प्रतिज्ञाहेतूदाहरणोपनयनिगमानि पञ्चावयवाः 'पर्वतोऽग्निमान्' इति प्रतिज्ञा 'धूमवत्त्वात्' इति हेतुः 'यो यो धूमवान् स सोऽग्निमान्' इत्युदाहरणम् 'तथा चायम्' इत्युपनयः 'तस्मात्तथा' इति निगमनम्।**

---

(१) प्रयोजकत्वञ्च साक्षात्परम्परया वा कारणत्वमिति बोध्यम्।

(२) उपचारो नाम मुख्यव्यवहार इति यावत्।

( पदकृ० ) ननु 'पञ्चावयववाक्यम्' इत्यत्र के ते पञ्चावयवाः, अतस्तान्दर्शयति—प्रतिज्ञेति। प्रतिज्ञाद्यन्यतमत्वम् अवयवत्वम्। साध्यविशिष्टपक्षबोधकवचनं प्रतिज्ञा। पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनं हेतुः व्याप्तिप्रतिपादकदृष्टान्तवचनम् उदाहरणम्। उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकं वचनम् उपनयः। पक्षे साध्यस्याबाधितत्वप्रतिपादकवचनं निगमनम् इदमेव लक्षणं हृदि निधाय प्रतिज्ञादीन् विशिष्य दर्शयति—पर्वतो वह्निमानित्यादिना।

( प्रतिवि० ) प्रतिज्ञाहेतुरुदाहरणमुपनयः निगमनं चेति पञ्चावयवाः। परार्थानुमानस्य साध्यवत्त्वेनपक्षबोधकवाक्यप्रयोगः प्रतिज्ञा। पर्वतोऽग्निमानिति वचनप्रयोगे साध्याग्निमत्त्वेन पर्वतबोधनाल्लक्षणसङ्गतिः। पञ्चम्यन्तसप्तम्यन्तान्यतरलिङ्गबोधकवचनप्रयोगो हेतुः। धूमवत्त्वादित्युक्ते पञ्चम्यन्तपदप्रयोगात् लिङ्गभूते धूमे लक्षणसमन्वयः। व्याप्तिबोधकदृष्टान्तकथनमुदाहरणम्। यो यो धूमवान् स सोऽग्निमानित्युक्ते धूमाग्न्योर्व्याप्तिबोधनाल्लक्षणसङ्गमनम्। व्याप्तिवैशिष्ट्येन हेतोः पक्षताबोधनमुपनयः। वह्निव्याप्यधूमवांश्चायमिति वाक्यप्रयोगे धूमाग्न्योः व्याप्तिवैशिष्ट्येन धूमरूपहेतोः पर्वतवृत्तित्वबोधनात् लक्षणसमन्वयः। हेतुज्ञानज्ञाप्यत्वेन पक्षे साध्यस्याबाधितत्वबोधकवाक्यप्रयोगो निगमनम्। यस्माद्वह्निव्याप्यधूमवान् पर्वतस्तस्माद्वह्निमानित्युक्ते धूमज्ञानज्ञापितत्वेन वह्नेः पर्वतेऽबाधितत्वज्ञानेन लक्षणसमन्वयः।

स्वार्थानुमितिपरार्थानुमित्योः किं करणम् ।

स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरा (१) मर्श एव करणम् । तस्माल्लिङ्गपरा (२) मर्शोऽनुमानम् ।

( पदकृ० ) लिङ्गेति । ज्ञायमानं लिङ्गमनुमितिकरणम् इति वृद्धोक्तं न युक्तम् । 'इयं यज्ञशाला वह्निमती अतीतधूमात्' इत्यादौ लिङ्गाभावेऽप्यनुदर्शनात् इत्यभिप्रायवान् लिङ्गपरामर्श एव करणम् इत्याचष्टे—'लिङ्गपरामर्श एव' इति अनुमानमुप-संहरति-तस्मादिति । अनुमितिकरणत्वादित्यर्थः । अयमेव ( ३ ) 'तृतीयज्ञानम्' इत्युच्यते । तथाहि-महानसादौ धूमाग्न्यो-र्व्याप्तौ गृह्यमाणाया यद्धूमज्ञानं तदादिमम् । पक्षे यद्धूमज्ञानं तद्द्वितीयम् । अत्रैव (४) वह्निव्याप्यत्वेन तद्धूमज्ञानं तत्तृतीयम् अयमेव लिङ्गपरामर्श इत्युच्यते-अनुमानमिति । 'व्यापारवत्कारणम्' इति मते व्याप्तिज्ञानमेवानुमानम् लिङ्गप-रामर्शो व्यापारः इत्यवधेयम् ( ५ ) ।

( प्रतिवि० ) स्वार्थानुमाने परार्थानुमाने च लिङ्गपरामर्श-तत्कारणीभूतव्याप्तिज्ञानमेव हेतुः। अतः लिङ्गपरामर्श एवानुमि-तिकरणत्वादनुमानम् ।

---

( १ ) लिङ्गपरामर्शतत्करणव्याप्तिज्ञानमेवानुमितिकरणमित्यर्थः ।

( २ ) लिङ्गपरामर्शतत्कारणीभूतज्ञानमनुमानमित्यर्थः ।

( ३ ) लिङ्गपरामर्श एवेत्यर्थः ।

( ४ ) परामर्श एवेत्यर्थः ।

( ५ ) फलायोगव्यवच्छिन्नं कारणं करणमिति मते तु मूलोक्तरीत्या परामर्शस्यापि करणत्वमस्तु इति भावः ।

लिङ्गस्य कति भेदा अन्वयव्यतिरेकिणः किं लक्षणम्-

लिङ्गं त्रिविधम्—अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि। यथा वह्नौ साध्ये धूमवत्त्वम् यत्र धूमस्तत्राग्निः यथा 'महानसम्' इत्यन्वयव्याप्तिः 'यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा 'ह्रदः' इति व्यतिरेकव्याप्तिः।

(न्यायबो०) अन्वयेनेति। व्यापकसामानाधिकरण्यरूपव्याप्तिमानित्यर्थः। व्याप्तिव्यतिरेकेणेति। व्यतिरेको नामाभावः। तथा च साध्याभावहेत्वभावयोर्व्यतिरेकव्याप्तिः (इत्थं च) 'यत्र वह्न्यभावस्तत्र धूमाभावः' इति यत्र पदवीप्सया वह्न्यभाववति यावति धूमाभावग्रहणे यावत्पदस्य व्यापकपरतया धूमाभावे वह्न्यभावव्यापकत्वं लब्धम्। एवं च वह्न्यभावनिष्ठव्याप्तेः स्वा(१) श्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन धूमनिष्ठतया गृहीतव्यतिरेकव्याप्तिमत्त्वेन व्यतिरेकित्वेन धूमव्यापकवह्निसामानाधिकरण्यरूपान्वयव्याप्तिमत्त्वेनान्वयित्वेन च गृह्यते (२) व्यतिरेकपरामर्शस्तु वह्न्य(३) भावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वतः इत्याकारकः।

---

(१) स्वं वह्न्यभावनिष्ठव्याप्तिः।

(२) व्याप्तिगृ ह्यते इत्यर्थः।

(३) वह्न्यभावस्य व्यापकीभूतो योऽभावो धूमाभावस्तत्प्रतियोगी यो धूमस्तद्वान् पर्वत इत्यर्थः।

( पदकृ० ) अन्वयव्यतिरेकिणो लक्षणमाह—अन्वयेनेति । तृतीयायाः प्रयोज्यत्वमर्थः । साध्यसाधनयोः साहचर्यमन्वयः, तदभावयोः साहचर्यं व्यतिरेकः । तथा च अन्वयप्रयोज्यव्याप्तिमद्व्यतिरेकप्रयोज्यव्याप्तिमदन्वयव्यतिरेकि इत्यर्थः । केवलव्यतिरेकिव्याप्त्यतिव्याप्तिवारणाय 'अन्वयेन' इति । केवलान्वयिनि व्यभिचारवारणाय 'व्यतिरेकेण' इति । तथा च अन्वयव्याप्तिरुपदर्शितैव । व्यतिरेकव्याप्तिश्च 'साध्याभाव (१) व्यापकीभूताभावप्रतियोगित्वम्' इत्यर्थः । तदुक्तम्—

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ।
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ।
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः (२) इति ।

(प्रतिवि०) लीनं परोक्षभूतं वह्न्यादिकं व्याप्तिशक्तेर्गमयतीति व्युत्पत्त्या लिङ्गं गमकम् । तदन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिभेदात् त्रिविधम् । साध्यसाधनयोर्व्याप्तिरन्वयव्याप्तिः । साध्यसाधनाभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः । एवञ्चान्वयप्रयोज्यव्याप्तिमत्त्वे सति व्यतिरेकप्रयोज्यव्याप्तिमत्त्वमन्वयव्यतिरेकिलक्षणम् । वह्निमान् धूमवत्त्वादित्यत्र यत्र धूमस्तत्राग्निर्यथा महानसमित्युक्ते साध्यसाधनयोर्वह्निधूमयोरन्वयव्याप्तिसत्त्वेन यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रद

---

( १ ) वह्निमान् धूमादित्यादौ वह्न्यरूपसाध्याभावस्य व्यापकीभूतो योऽभावो धूमाभावस्तत्प्रतियोगित्वं धूमे इति लक्षणसमन्वयः ।

( २ ) साधनाभाव इत्यर्थः ।

इत्युक्ते साध्यसाधनाभावयोर्वह्न्यभावधूमाभावयोर्व्यतिरेकव्याप्तेश्च लिङ्गे धूमे सत्त्वेन लक्षणसमन्वयः । केवलान्वयिनि केवलव्यतिरेकिणि चातिव्याप्तिवारणायान्वयेन व्यतिरेकेण चेति विशेष्यविशेषणदलम् ।

केवलान्वयिनः किं लक्षणम्—

अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा 'घटोऽभिधेयः प्रमेयत्वात् पटवत्' इति । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च ।

( न्यायबो० ) केवलान्वयिनो लक्षणमाह—अन्वयेति । व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम् । साध्ये केवलान्वयित्वम् अत्यन्ताभावप्रतियोगित्वम् । तथा च अभावप्रतियोगिसाध्यव्यापकत्वं केवलान्वयिहेतोर्लक्षणम् । एतल्लक्षणं हेतोर्व्यतिरेकित्वे न संगच्छते । साध्ये केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावात् 'अन्वयमात्रव्याप्तिकं केवलान्वयि' इतिमूलकारोक्तलक्षणमुपपन्नम् । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । न च एवं संयोगाभावे कालाभावे चाव्याप्तिः इति वाच्यम् स्व (१) विरोधिवृत्तिमदत्यन्ता-

---

(१) स्वविरोधीति । व्याप्यवृत्तिरित्यर्थः । संयोगतदभावयोविरोधित्वं नास्ति । कालाभावाभावस्य च वृत्तिमत्त्वं नास्त्यतः स्वविरोधिवृत्तिमदिति । स्वविरोधी यो वृत्तिमदत्यन्ताभावस्तदप्रतियोगित्वमित्यर्थः । स्वपदेन घटाभावः तस्य विरोधी यो वृत्तिमदत्यन्ताभावो घटाभावाभावः तदप्रतियोगित्वं घटाभावेऽप्रतियोगित्वञ्च वाच्यत्वादौ इति लक्षणसमन्वयः ।

भावाप्रतियोगित्वस्य तदर्थत्वात्। 'एकजातीय (१) सम्बन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्वम्' इति नव्याः।

(पदकृ०) केवलान्वयिनो लक्षणमाह–अन्वयेति । अन्वयेनैव व्याप्तिर्यस्मिन्स तथा । प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिं निराकरोति–अत्रेति । अभिधेयत्वसाधकानुमाने इत्यर्थः। ननु कुतस्तन्निषेधः अतस्तत्र हेतुमाह–सर्वस्येति। पदार्थमात्रस्येत्यर्थः। तथा च सकले पदाभिधेयत्वस्येश्वरप्रमाविषयत्वस्य चात्यन्ताभावप्रतियोगित्वरूपकेवलान्वयित्वेन तदभावाप्रसिद्ध्या तद्घटितव्यतिरेकव्याप्तिर्न सम्भवत्येवेति भावः।

(प्रतिवि०) अन्वयेनैव व्याप्तिर्यन तत्। अन्वयेतरव्याप्तिशून्यत्वे सत्यन्वयव्याप्तिमत्त्वं केवलान्वयिलक्षणम्। अत्यन्ताभावाप्रतियोगित्वमिति यावत्। स्वरूपसम्बन्धेन सर्वत्र विद्यमानत्वमिति तु तत्त्वम्। घटोऽभिधेयः प्रमेयत्वादित्यत्र सर्वस्यापि पदार्थस्यास्मदादिप्रमाभिधाया ईश्वरीयप्रमाभिधाया वा विषयत्वेन प्रमेयत्वाभिधेयत्वयोरन्वयमात्रव्याप्तिमत्वाल्लक्षणसमन्वयः।

व्यतिरेकिलिङ्गस्य किं लक्षणम्–

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि। यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्। यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलम्। न चेयं तथा। तस्मान्न तथेति। अत्र 'यद्गन्धव-

(१) एकजातीयत्वञ्च स्वरूपसम्बन्धे विशेषः।

तदितरेभ्यो भिन्नम्' इत्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् ।

(न्यायबो०) केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति। अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम्। यथा पृथिवीति। अपृथिवीत्वावच्छिन्नं पक्षः, पृथिवीतरजलाद्यष्टभेदः साध्यः, गन्धवत्त्वं हेतुः। अत्र 'यद्गन्धवत् तदितरभेदवत्' इत्यन्वयदृष्टान्ताभावात् गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासम्भवात्। किन्तु यत्र यत्तरभेदाभावस्तत्र तत्र गन्धाभावः यथा जलादिकम् इति व्यतिरेकदृष्टान्ते जलादावितरभेदाभावरूपसाध्याभावव्यापकता गन्धाभावे गृह्यते। इममेवार्थं मनसि निधाय 'यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जलम्' इति ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान्, एवं व्यतिरेकव्याप्ति ग्रहानन्तरम् इतरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवी इत्याकारकव्यतिरेकिपरामर्शात् 'पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतराभेदत्वावच्छिन्नविधेयताका पृथिवी इतरभेदवती' इत्याकारानुमितिर्जायते इति तत्त्वम्। यथा श्रुतमूलार्थस्तु यथा जलमिति। जलमितरभेदाभाववत्—'इतरभेदाभावव्यापकगन्धाभाववच्च' इत्येवंप्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यते इत्यर्थः। नचेयं तथेति। इयं पृथिवी,तथा इतरभेदाभावव्यापकगन्धाभाववती न किन्तु तद्भाववती गन्धवती इत्यर्थः। तस्मान्न तथेति।

तच्छब्देन गन्धाभावरूपस्य गन्धस्य परामर्शेन 'तस्मात्' इति पञ्चम्यन्तात् गन्धाभावाभाववत्त्वात् इत्यर्थोपलब्धेः, तथा इतरभेदाभाववतो न, इत्यस्याभावः, तथा च इतरभेदाभाववती इतरभेदवती इत्यर्थः।

( पदकृ० ) केवलव्यतिरेकिणो लक्षणमाह--व्यतिरेकेति। व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत्तथा। अन्वयव्यतिरेकिण्यतिव्याप्तिवारणाय मात्रपदम् न चेयं तथेति। इयं पृथिवी न तथा न गन्धाभाववती इत्यर्थः। तस्मान्न तथेति। गन्धाभाववत्त्वाभावादितरभेदाभाववती न इत्यर्थः। ननु अत्र किमिति नान्वयव्याप्तिः इत्याशंक्य परिहरति—अत्रेति। इतरभेदसाधकानुमाने इत्यर्थः। इदमुपलक्षणम्। जीवच्छरीरं सात्मकं प्राणादि(१)मत्त्वात् यन्नैवं तन्नैवं यथा घटः प्रत्यक्षादिकं प्रमाणम् इति व्यवहर्तव्यम्, प्रमाकरणत्वात् यन्नैवं तन्नैवं यथा "प्रत्यक्षाभासः" विवादास्पदम् आकाशम् इति व्यवहर्तव्यम् शब्दवत्त्वात् इत्यादिकमपि केवलव्यतिरेकि इति द्रष्टव्यम्।

( प्रतिवि० ) व्यतिरेकेतरव्याप्तिशून्यत्वे व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकव्याप्तिश्च साध्याभावव्यापकीभूताभावप्रतियोगित्वम् वह्निमान् धूमादित्यत्र वह्निरूपसाध्याभावव्यापकीभूताभावस्य धूमाभावस्य प्रतियोगी धूम इति लक्षणसमन्वयः। केवलव्यतिरेकिलिङ्गोदाहरणं पृथिवी जलाद्यष्टभेदवती गन्धवत्त्वादिति। अत्र तद्गन्धवत्तदितरभेदवदिति दृष्टान्तासम्भवदन्वयव्याप्तिर्न सम्भवति किन्तु यत्र यत्रेतरभेदाभावस्तत्र

---

( १ ) अत्रादिपदेनेन्द्रियाणि ग्राह्याणि।

तत्र गन्धाभावो यथा जलादिकमिति दृष्टान्तभूतजलादावितर-भावरूपसाध्याभावव्यापकता गन्धाभाव इति व्यतिरेकव्याप्ति-रेवावलोक्यते । न चेयं पृथिवी गन्धाभाववती तस्माद्गन्धा-भाववत्त्वादितरभेदाभाववती इतरभेदवतीति भावः ।

पक्षस्य किं लक्षणम्—

**संदिग्धसाध्यवान् पक्षः । यथा—धूमवत्त्वे सति हेतौ पर्वतः ।**

( न्यायबो० ) संदिग्धसाध्येति । साध्यप्रकारकसंदेह ( १ ) विशेष्यत्वम् पक्षत्वम् । एतच्च अनुमितेः पूर्वं साध्यसंदेहो निय-मेन जायते इत्यभिप्रायेण लक्षणं प्राचीनैः कृतम् । गगनविशे-ष्यकमेघप्रकारकसंदेहाभावदशायामपि गृहमध्यस्थपुरुषस्य घन-गर्जितश्रवणेन 'गगनं मेघवत्' इत्याकारानुमितिर्जायते गग-नत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकानुमि-तिदर्शनात् प्राचीनमतं विहाय नवीनैः 'अनुमित्युद्देश्यत्वं ( २ ) पक्षत्वम्' इति स्थिरीकृतम् ।

( पदकृ० ) अथ पृथिवीमात्रस्य पक्षत्वात् इत्यत्र किं नाम पक्षता, तां निर्वक्ति—संदिग्धेति । सपक्षवारणाय संदिग्धेति ।

( प्रतिवि० ) संदिग्धः सन्देहविषयीभूतः साध्यो यस्मिन्नि-ति व्युत्पत्त्या साध्यप्रकारकसन्देहविशेष्यत्वं पक्षलक्षणम् । पर्वते धूमदर्शनेन वह्निरस्ति न वेति सन्देहसत्त्वाल्लक्षणसमन्वयः स-पक्षेऽतिव्याप्तिवारणाय सन्दिग्धेति ।

---

( १ ) सन्देहश्च पर्वतो वह्निमान्नवेत्याकारकः ।
( २ ) तच्च सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्वरूपमेवेति बोध्यम् ।

सपक्षस्य लक्षणं प्रदर्शयति—

**निश्चितसाध्यवान् सपक्षः। यथा तत्रैव महानसम्।**

( न्यायबो० ) निश्चितसाध्येति । साध्यप्रकारकनिश्चय-विशेष्यत्वं सपक्षत्वम् । निश्चयश्च, महानसं वह्निमत् इत्याकारकः ।

( पदकृ० )निश्चितेति । सपक्षेऽतिव्याप्तिवारणाय निश्चितेति । तत्रेति धूमवति हेतौ इत्यर्थः ।

( प्रतिवि० ) निश्चितः साध्यो यत्रेति व्युत्पत्त्या साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षलक्षणम् । धूमवत्त्वे हेतौ महानसं सपक्षः । तत्र महानसं वह्निमदिति निश्चयसत्त्वेन निश्चितसाध्यवत्त्वस्य सत्त्वात् । पक्षेऽतिव्याप्तिवारणाय निश्चितेति पदम् ।

विपक्षलक्षणं प्रदर्शयति—

**निश्चितसाध्याभाववान् विपक्षः। यथा तत्रैव ह्रदः।**

( न्यायबो० ) निश्चितसाध्याभावेति । साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षत्वम् । निश्चयश्च ह्रदो वह्न्यभाववान् इत्याकारकः ।

( पदकृ० ) निश्चितेति । सपक्षे अतिव्याप्तिवारणाय साध्याभाव इति पक्षे अतिव्याप्तिवारणाय निश्चितेति । तत्रैवेति धूमवत्त्व एव । इति ।

( प्रतिवि० ) निश्चितः साध्याभावो यत्रेति व्युत्पत्त्या साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षलक्षणम् । धूमवत्त्वे हेतौ ह्रदो विपक्षस्तत्र ह्रदो वह्न्यभाववानिति निश्चयसत्त्वेन

निश्चितसाध्याभाववत्त्वस्य सत्त्वात्। निश्चितपदं पक्षेऽतिव्याप्तिवारणाय।

अथ हेत्वाभासाः निरूप्यन्ते—

## सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः।

(न्यायबो०) एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति-सव्यभिचारेति। हेतुवदाभासन्त इति हेत्वाभासा दुष्टहेतवः इत्यर्थः। दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षासिद्धबाधाः। एतद्विशिष्टा हेतवो दुष्टहेतवः इत्यर्थः। हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा भवति। अतो वादिनिग्रहार्थं वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः। पर्वतो वह्निमान् प्रमेयत्वात् इत्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाने वह्न्यभाववद्वृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धः फलम्।

(पदकृ०) सद्धेतून्निरूप्य प्रसंगाद्धेत्वाभासानाह–सव्यभिचारेति। अत्रेदं बोध्यम्। अन्वयव्यतिरेकि तु पञ्चरूपोपन्नं स्वसाध्यं साधयितुं क्षमते। 'तानि कानि' इति चेत् श्रूयताम् पक्षधर्मत्वम्, सपक्षसत्त्वम्, विपक्षव्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति। अबाधितः साध्यरूपविषयो यस्य तत्तथोक्तम् तस्य भावस्तत्त्वम् एवं साध्याभावसाधकं हेत्वन्तरं यस्य स 'सत्प्रतिपक्ष' इत्युच्यते, स नास्ति यस्य सः असत्प्रतिपक्षः तस्य भावस्तत्त्वम् इति बोध्यम्। केवलान्वयि

तु चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते। तस्य विपक्ष-विपर्ययेण 'तद्व्यावृत्तिविपर्ययात्'। केवलव्यतिरेक्यपि तथा तस्य सपक्षविपर्ययेण' तत्सत्वविपर्ययात् इति। उपदर्शित-रूपाणां मध्ये कतिपयरूपोपपन्नत्वात् 'हेतुवदाभासन्ते' इति हेत्वा-भासाः। अन्वयित्वं च। अनुमितितत्करणान्यतरप्रतिबन्धकय-थार्थज्ञानविषयत्वम्। वाधस्थले वह्निरनुष्ण इत्यनुमितिप्रतिब-न्धकं यज्ज्ञानम् उष्णत्ववद्वह्नावनुष्णत्वसाधकं 'द्रव्यत्वम्' इत्याकारकम्। तद्विषयस्य विषयितासंबन्धेन द्रव्यत्वरूपहेत्वा-भासे सत्वाल्लक्षणसमन्वयः (१) सद्धेतुवारणाय यथार्थ इति घटादिवारणाय अनुमितितत्करणप्रतिवन्धक इति। व्यभिचा-रिण्यव्याप्तिवारणाय 'अनुमितितत्करणान्यतर' इति।

(प्रतिवि०) हेतुवदाभासन्ते ये ते हेत्वाभासाः व्यभिचार विरोधसत्प्रतिपक्षासिद्धवाधात्मकदोषविशिष्टत्वाद् दुष्टहेतवः स-व्यभिचारो विरुद्धः सत्प्रतिपक्ष असिद्धो वाधितश्चेत्येवं पञ्च। हेतौ दोषज्ञाने जातेऽनुमितिप्रतिवन्धो व्याप्तिप्रतिवन्धो वावश्यं जायत इति दर्शनादनुमितिव्याप्त्यन्यतरप्रतिवन्धकयथार्थज्ञान-विषयत्वं हेत्वाभाससामान्यलक्षणम्। वह्निरनुष्णो द्रव्यत्वादि-त्यत्रोष्णत्ववति वह्नावनुष्णत्वसाधकस्य द्रव्यत्वस्य वह्निरनुष्ण इत्यनुमितिप्रतिबन्धकज्ञानविषयत्वस्य विषयितासम्बन्धेन

(१) एवं 'वह्निमान्, प्रमेयत्वात् इत्यादौ व्यभिचारिस्थलेऽपि पर्वतो वह्निमानित्याद्यनुमितिकरणं वह्निव्याप्यं प्रमेयत्वमित्यादि ज्ञानं तत्प्रतिवन्धकत्वञ्च वह्न्यभाववत् वृत्तिः प्रमेयत्वमित्यादिज्ञाने तद्विषयत्वञ्च प्रमेयत्वादौ हेताविति लक्षणसमन्वयः।

द्रव्यत्वरूपहेत्वाभासे सत्त्वाल्लक्षणसमन्वयः। घटादावतिव्याप्ति-वारणायानुमितिव्याप्तिप्रतिबन्धक इति। वह्निमान् प्रमेयत्वा-दित्यादौ व्यभिचारिस्थलेऽव्याप्तिनिरासायानुमिति व्याप्त्य-न्यतरेति। भ्रमवारणाय सद्धेतावतिव्याप्तिवारणाय च यथार्थ इति।

सव्यभिचारस्य हेत्वाभासस्य किं लक्षणं के च भेदाः तान् प्रदर्शयति—

**सव्यभिचारोऽनैका (१) न्तिकः। स त्रिविधः—साधारणासाधारणानुपसंहारिभेदात्।**

(प्रतिवि॰) साधारणासाधारणानुपसंहार्यन्यतमत्वं सव्य-भिचारलक्षणम्। सव्यभिचारोऽनैकान्तिक इति कथनं तु सव्यभिचारपदस्यानैकान्तिक इति प्राचीनानां सङ्केत इति द्योतनाय। साधारणमसाधारणमनुपसंहारि चेति तस्य त्रयो भेदाः।

साधारणस्य हेत्वाभासस्य लक्षणं दर्शयति—

**साध्याभाववद्वृत्तिः साधा [२] रणोऽनैकान्तिकः। यथा 'पर्वतोऽग्निमान् प्रमेयत्वात्' इति प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्।**

(१) बालव्युत्पत्तये प्राचीन संकेतं दर्शयति—अनैकेति। अनैकान्तिकत्वं च साधारणाद्यन्यतमत्वम्।

(२) अनेन साधारणेनापि साध्यसामानाधिकरण्यरूपो व्याप्तिग्रहः इति बोध्यते।

( पदकृ० ) तत्रेति । साधारणादित्रयमध्ये इत्यर्थः । अथ 'विरुद्धेऽतिप्रसक्तिः' इति मास्मद्दप्यः । सपक्षवृत्तित्वस्यापि निवेशात् । अत्रैवमपि स्वरूपासिद्धे दूषणं जागर्ति इति मा वह गर्वम् । पक्ष ( १ ) वृत्तित्वस्यापि तथात्वात् ।

( प्रतिवि०) साध्याभाववद्वृत्तित्वं साधारणानैकान्तिकलक्षणम् । साध्यसमानाधिकरणव्याप्तिप्रतिबन्धकत्वं साधारणत्वमिति यावत् । पर्वतो वह्निमान् प्रमेयत्वादित्यादौ सर्वस्य पदार्थस्य प्रमेयत्वात् प्रमेयत्वरूपहेतोः वह्न्यभाववति ह्रदेऽपि सत्त्वाल्लक्षणसमन्वयः ।

असाधारणानैकान्तिकस्य लक्षणं उच्यताम्—

## सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा 'शब्दो नित्यः' शब्दत्वात् इति । शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्तिः ।

( न्यायबो० ) असाधारण इति । सर्वसपक्षव्यावृत्तत्वं निश्चितसाध्यवद्वृत्तित्वम् । साध्यवद्वृत्तित्वं च साध्यसामानाधिकरण्यम् । हेतौ साध्यसामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ।

---

( १ ) तथा च पक्षसपक्षवृत्तित्वविशिष्टसाध्याभाववद्वृत्तिः साधारण इति, फलितोऽर्थः ।

( पदकृ० ) पक्षमात्रेति। सर्वे ये सपक्षा विपक्षास्तेभ्यो व्यावर्तत इति व्यावृत्तः। केवलव्यतिरेकिवारणाय। 'तद्भिन्नः' (१) इत्यपि देयम्।

( प्रतिवि० ) सर्वसपक्षविपक्षव्यावृत्तत्वे सति पक्षमात्रवृत्तित्वमसाधारणस्य लक्षणम्। शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वं हेतुःसर्वेभ्यः सपक्षेभ्यो विपक्षेभ्यश्च व्यावृत्तः शब्दमात्रे वर्तत इति भवत्यसाधारणः।

अनुपसंहारिणः लक्षणम् प्रदर्शयति—

अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी (२)। यथा—'सर्वमनित्यं प्रमेयत्वात् इति' अत्र सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति।

( न्यायबो० ) अनुपसंहारिणं लक्षयति—अन्वयेति। उभयत्र दृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्ति ज्ञानोभयसामग्री नास्तीत्यर्थः। पक्षातिरिक्ताप्रसिद्धेरित्यर्थः।

( पदकृ० ) अन्वयेति। केवलान्वयिन्यतिव्याप्तिवारणाय 'अन्वय' इति। केवलव्यतिरेकिण्यतिव्याप्तिवारणाय व्यतिरेक इति। अत्रेति। उपदर्शितानुमाने इत्यर्थः।

---

(१) तथा चान्वयव्यतिरेकव्याप्तिशून्यत्वे सति पक्षमात्रवृत्तिरसाधारण इति फलितोऽर्थः।

( २ ) अनेन च व्यतिरेकव्याप्तिग्रहः प्रतिबाध्यते इति बोध्यम्।

( प्रतिबि० ) अन्वयदृष्टान्तव्यतिरेकदृष्टान्तरहितत्वमनुपसंहारिणोऽनैकान्तिकलक्षणम् । सर्वमनित्यं प्रमेयत्वादित्युक्ते सर्वस्य पदार्थस्य पक्षीकृतत्वादन्वयव्यतिरेक्युभयविधदृष्टान्तो न सम्भवतीति लक्षणसमन्वयः । अन्वयव्यतिरेकिपदं क्रमेण केवलान्वयिनि केवलव्यतिरेकिणि चातिव्याप्तिवारणाय ।

विरुद्धस्य लक्षणं निदर्शयति—

**साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वात् इति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ।**

( न्यायबो० ) विरुद्धं लक्षयति—साध्याभावव्याप्त इति । तथा च पक्षविशेष्यकसाध्याभावव्याप्तहेतुप्रकारकज्ञानात् पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धः फलम् । एवं सत्प्रतिपक्षेऽपि । विरुद्धसत्प्रतिपक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः सत्प्रतिपक्षे द्वौ हेतू विरुद्ध एको हेतुः इति यावत् । साध्याभावसाधकहेतुः साध्यसाधकत्वेनोपन्यस्तः इत्यसामर्थ्यसूचनमपि भवति ।

( पदकृ० ) विरुद्धं लक्षयति—साध्येति । सद्धेतुवारणाय 'साध्याभावव्याप्तः' इति । सत्प्रतिपक्षवारणाय 'सत्प्रतिपक्षभिन्नः' इत्यपि ज्ञेयम् । कृतेति । कार्यत्वादित्यर्थः । कृतकत्वमिति । अनित्यत्वेन व्याप्तमिति । यद्यत्कृतकं तत्तदनित्यम् इति व्याप्तेर्भवत्येव तथेति भावः ।

( प्रतिवि० ) साध्यवदवृत्तित्वे सति सत्प्रतिपक्षान्यत्वे च सति हेतुत्वं विरुद्धलक्षणम्। साध्याभावसाधकस्य हेतोःसाध्यसाधकतयोपन्यसनमिति यावत्। शब्दो नित्यः कृतकत्वादित्यत्र यद्यत्कृतकं तत्तदनित्यमिति व्याप्तेः नित्यत्वाभावेनानित्यत्वेन व्याप्तत्वादनित्यत्वसाधकतया कृतकत्वादिति विरुद्धो हेतुः। सद्धेतौ सत्प्रतिपक्षे चातिव्याप्तिवारणाय क्रमेण साध्याभावव्याप्त इति सत्प्रतिपक्षान्य इति च विशेषणम्।

सत्प्रतिपक्षस्य लक्षणम् प्रदर्शयति—

**साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः (१) यथा'शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्, शब्दोऽनित्यः कार्यत्वात् घटवत्।**

( पदकृ० ) सत्प्रतिपक्षं लक्षयति–साध्येति। 'यस्य हेतोः साध्याभावसाधकं। साध्याभावस्यानुमापकं हेत्वन्तरं प्रतिपक्षे हेतुर्विद्यते, स हेतुः सत्प्रतिपक्ष इत्यर्थः। अयमेव 'प्रकरणसमः' इत्युच्यते। विरुद्धवारणाय 'हेत्वन्तरं यस्य' स इति। वह्न्यादिवारणाय ( २ ) साध्याभाव इति।

( प्रतिवि० ) यस्य प्रयुक्तस्य हेतोः साध्याभावसाधकं साध्याभावानुमापकं हेत्वन्तरं प्रतिपक्षहेतुभूतमन्योहेतुर्विद्यते सः।

---

( १ ) सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिविरोधित्वमिति बोध्यम्।

( २ ) साधकं हेत्वन्तरं यस्य स सत्प्रतिपक्ष इत्युक्ते वह्न्यादि साध्यसाधकं हेत्वन्तरं धूमादि तथा च वह्न्यादिसाध्ये एव सत्प्रतिपक्षव्यवहारः स्यादिति भावः।

साध्याभावानुमापकहेत्वन्तरयुक्तत्वं सत्प्रतिपक्षलक्षणम्। शब्दो नित्यः श्रावणत्वादित्यत्र श्रावणत्वेन साध्यमानं नित्यत्वं शब्दोऽनित्यः कार्यत्वादिति कार्यत्वेन हेत्वन्तरेणानित्यत्वसाधकेन प्रतिपक्षितमिति भवति लक्षणसमन्वयः। साध्याभावसाधकमिति पदं वह्न्यादावतिव्याप्तिवारणाय। विरुद्धेऽतिव्याप्तिवारणाय हेत्वन्तरपदम्।

असिद्धस्य भेदाः प्रदर्श्यन्ते—

**असिद्धस्त्रिविधः—आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति।**

( पदकृ० ) असिद्धं विभजते 'असिद्ध' इति। आश्रयासिद्धाद्यन्यतमत्वमसिद्धम्।

( प्रतिवि० ) आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धभेदादसिद्धस्त्रिविधः। आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धाद्यन्यतमत्वमसिद्धलक्षणम्।

आश्रयासिद्धस्य लक्षणम् प्रदर्शयति—

**आश्रयासिद्धो यथा—गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत्। अत्र गगनारविन्दमाश्रयः स च नास्त्येव।**

---

(१) आश्रयासिद्धेश्च पक्षधर्मताज्ञानद्वारा परामर्शप्रतिबन्धः फलमिति बोध्यम्।

( न्यायबो० ) आश्रयासिद्ध इति। आश्रयासिद्धिर्नाम पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धिः (१)। तथा च गगनीयत्वविशिष्टसिद्धेः सौरभ्यानुमितिर्न भवति।

(पदकृ०) आश्रयासिद्धत्वं च पक्षतावच्छेदकाभाववत्पक्षकत्वम्। भवति हि अरविन्दे गगनीयत्वरूपपक्षतावच्छेदकाभाववत्त्वम् अरविन्दे गगनीयत्वविरहोऽत आह-अत्रेति। उपदर्शितानुमान इत्यर्थः।

( प्रतिवि० ) आश्रयः पक्षोऽसिद्धो यस्येति व्युत्पत्त्या पक्षे पक्षतावच्छेदकविरहवत्त्वमाश्रयासिद्धलक्षणम्। गगनारविन्दं सुरभीति प्रयोगे पक्षभूतेऽरविन्दे गगनीयत्वरूपपक्षतावच्छेदकस्याभावाल्लक्षणसमन्वयः। गगनारविन्दस्याश्रयस्याप्रसिद्धेः।

स्वरूपासिद्धस्य लक्षणम् प्रदर्शयति—

**स्वरूपासिद्धो यथा शब्दो गुणः चाक्षुषत्वात् रूपवत्। अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात्।**

( न्यायबो० ) स्वरूपासिद्धिर्नाम पक्षे हेत्वभावः। तथा च हेत्वभावविशिष्टपक्षज्ञानात् पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परामर्शप्रतिबन्धः फलम्।

( पदकृ० ) पक्षे हेत्वभावः स्वरूपासिद्धिः। सद्धेत्वभावेऽतिव्याप्तिवारणाय। पक्षे इति। घटाद्यभाववारणाय 'हेतुः' इति। सोऽयं स्वरूपासिद्धिः शुद्धासिद्धः—भागा ( १ )-

---

( १ ) दुष्टलक्षणमपि हेत्वाभास एव। तथाहि। अव्याप्तलक्षणं भागासिद्धेऽन्तर्भवति। असम्भवग्रस्तं च स्वरूपासिद्धेऽन्तर्भवति। अतिप्रसक्तलक्षणस्य व्याप्यत्वासिद्धेरन्तर्भावः। सिद्धसाधनस्य चाश्रयासिद्धेरन्तर्भावः। इत्येवंरूपेण बोध्यम्।

सिद्धविशेषणासिद्धविशेष्यासिद्धभेदेन चतुर्विधः। तत्राद्य-स्तूपदर्शित एव। द्वितीयो यथा—उद्भूतरूपादिचतुष्टयं गुणः रूपत्वात् इत्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन भागे 'स्वरूपासिद्धत्वम्'। तृतीयो यथा—वायुः प्रत्यक्षः रूपवत्त्वे सति स्पर्शवत्त्वात् इत्यत्र रूपवत्त्वविशेषणस्य वायावयववृत्तेस्त-द्विशिष्टस्पर्शवत्त्वस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्व-हति, विशेषणाभावे विशिष्टस्याप्यभावात्। तुरीयो यथा अत्रव विशेषणविशेष्यवैपरीत्येन (१) हेतुः तस्य स्वरूपासिद्धत्वं विशेष्याभावप्रयुक्तविशिष्टाभावात् इति बोध्यम्।

(प्रतिवि०) हेत्वभावविशिष्टपक्षवत्त्वं स्वरूपासिद्धलक्षणम्। शब्दो गुणश्चाक्षुषत्वादित्यनुमाने पक्षभूते शब्दे चाक्षुषत्वरूप-हेतोः शब्दस्य श्रावणत्वादभाव इति लक्षणसमन्वयः।

व्याप्यत्वासिद्धस्य तदन्तर्गतस्योपाधेश्च लक्षणम् प्रदर्शयति-

**सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्य-व्यापकत्वे सति साधनाव्यापकत्वम् उपाधिः। साध्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् सा-ध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रति-योगित्वं साधनाव्यापकत्वम्। पर्वतो धूमवान्**

---

(१) वायुः प्रत्यक्षः स्पर्शवत्त्वे सति रूपवत्त्वात्। इत्यत्र रूपवत्त्वरूप-विशेष्यस्य वायावभावेन तद्विशिष्टस्पर्शवत्त्वरूपविशेषणस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वमपेक्षितमेवेति।

वह्निमत्त्वात् 'इत्यत्र' आर्द्रेन्धनसंयोग उपाधिः। 'यत्र धूमः तत्रार्द्रेन्धनसंयोगः' इति साध्यव्यापकता। 'यत्र वह्निः' तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके अर्द्रेन्धनाभावात् इति साधनाव्यापकता एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोगः उपाधिः। सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम्।

( न्यायबो० ) व्याप्यत्वासिद्धमिति। प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत् धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम्। एवं वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत् वह्नौ तद्व्याप्यत्वं गृहीतम् तदेव व्यभिचारित्वं। तथा चोपाधिव्यभिचारित्वं साधने गृहीतं चेत् उपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचारित्वं गृहीतमेव। अनुमानप्रकारश्च पूर्वानुमानहेतुं पक्षीकृत्य वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात् घटत्वादिवत्। यो यत्साध्यव्यापकव्यभिचारी सर्वोऽपि साध्यव्यभिचारी। एवंप्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः। तथा च धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववद्वृत्तित्वरूपव्याप्तिग्रहप्रतिबन्धः फलम् न च व्यभिचाराभेद इति वाच्यं धूमाभाववद्वृत्तित्वाभावाभावत्वेन व्याप्यत्वासिद्धत्वं। धूमाभाववद्वृत्तित्वेन व्यभिचारत्वमिति भेदात्।

( पदकृ० ) व्याप्यत्वासिद्धं लक्षयति—'सोपाधिकः' इति। ननु 'कोऽयमुपाधिः' इत्यत आह—साध्येति। साधनाव्यापकत्वमुपाधिः इत्युक्ते 'शब्दो नित्यः कृतकत्वात्' इत्यत्र 'सामान्यवत्त्वे (१) सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वम् उपाधिः स्यात् तदर्थं साध्यव्यापकत्वमुक्तम्। तावत्युक्ते सामान्यवत्त्वादिनाऽनित्यत्वसाधने कृतकत्वमुपाधिः स्यात् तदर्थं साधनाव्यापकत्वमुक्तम्। उपाधिभेदमादायासम्भववारणाय व्यापकत्वशरीरेऽप्युत्पत्तिमादेयम् (२)। साधनभेदमादाय साधनस्योपाधित्ववारणायाव्यापकशरीरेऽप्यत्यन्तपदमवश्यं देयम्। सोऽयमुपाधिस्त्रिविधः—केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकश्चेति। तत्राद्यो मूले

---

(१) न च ध्वंसरूपकार्य्यत्वावच्छेदेन सामान्यवत्त्वमात्रस्यापि साधनाव्यापकत्वादित्येतावन्मात्रमुपाधिरस्त्विति वाच्यम् यद्युपाधिनिरूपितव्यापकत्वहेतौ स्यात्तदा हेतुनिरूपिताव्यापकत्वमुपाधौ भवेत् तदेव तु नास्ति तथाहि व्यापकत्वं हि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् स्वपदञ्च सामान्यवत्त्वरूपोपाधिपरम् तत्सामानाधिकरण्यवृत्त्यन्ताभावः गगनाद्यवच्छेदेन कृतकत्वात्यन्ताभावस्तत्प्रतियोगित्वमेव कृतकत्वरूपहेतोरित्यत आह—अस्मदादिबाह्येन्द्रियेति। तथा च नित्यानां सामान्यवतां गगनादीनामस्मदादिबहिरिन्द्रियग्रहणानर्हत्वात्सुवचं विशेषणम्। योगिनां तत्तदिन्द्रिययोग्यसूक्ष्मपदार्थानामपि भानात्तद्वारणायास्मदादीति। अन्तर्मनइन्द्रियेणात्मनो ग्रहणात् तद्वारणाय बाह्येन्द्रियेति एवं ह्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वमात्रस्योपाधित्वे सामान्याद्यवच्छेदेनोपाधेः सत्त्वात् हेतौ नास्तीति सामान्यवत्त्वविशिष्टबाह्येन्द्रियग्रहणार्हत्वं फलितमिति भावः।

(२) दत्तमित्यर्थः।

उपदर्शितः। एवं क्रत्वन्तर्वर्तिनी हिंसाऽधर्मजनिका हिंसात्वात् क्रतुवाह्यहिंसावत् इत्यत्र निषिद्धत्वमुपाधिः। तस्य यत्राधर्मजनकत्वम् तत्र निषिद्धत्वम् इति साध्यव्यापकता। यत्र हिंसात्वम् तत्र न निषिद्धत्वम् इति निषिद्धत्वमुपाधिः साधनाव्यापकः क्रतुहिंसायां निषिद्धत्वस्याभावात्। न हिंस्यात्सर्वाणि भूतानि इति सामान्यवाक्यतः 'पशुना यजेत' इत्यादिविरोधे वाक्यस्य वलीयस्त्वात्। अतो हिंसात्वं नाधर्मजनकत्वे प्रयोजकम् अपि तु निषिद्धत्वमेव इत्यादिकमपि द्रष्टव्यम्। द्वितीयो यथा—वायुः अप्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् तत्रोद्भवरूपवत्त्वम् उपाधिः। यस्य यत्र प्रत्यक्षत्वम् तत्रोद्भूतरूपवत्वम् इति न केवलसाध्यव्यापकत्वं रूपे व्यभिचारात् किंतु द्रव्यलक्षणो यः पक्षधर्मस्तदवच्छिन्नंवहिःतत्प्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वम् इति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव। आत्मनि व्यभिचारवारणाय वहिःपदम्। 'यत्र प्रत्यक्षस्पर्शाश्रयत्वम् तत्र नोद्भूतरूपवत्त्वम्' इति साधनाव्यापकत्वं च वायावुद्भूतरूपविरहात्। तृतीयो यथा—'प्रागभावाविनाशी जन्यत्वात्' इत्यत्र भावत्वम् उपाधिः तस्य यत्र विनाशित्वम् तत्र भावत्वम् इति न केवलसाधनावच्छिन्नविनाशित्वं यत्र तत्र भावत्वम् इति साधनावच्छिन्नसाध्यव्यापकत्वमेवास्ति। 'यत्र जन्यत्वम्' तत्र भावत्वम्। इति साधनाव्यापकत्वं च, ध्वंसे भावत्वविरहात् एवं 'स श्यामो मित्रतनयत्वात्' इत्यत्र शाकपाकजन्यत्वमुपाधिः। श्यामत्वस्य नीलपटेऽपि सत्त्वात् न केवलसाध्यव्यापकत्वम्। किंतु साधनावच्छिन्नसाध्यव्यापकत्वमेव अष्टमे पुत्रे। शाकपाकजन्यत्वविरहेण साधनाव्यापकत्वं च इत्यादिकं द्रष्टव्यम्।

( प्रतिवि० ) सोपाधिकत्वे सति हेतुत्वं व्याप्यत्वासिद्ध-लक्षणम् । उपाधिश्च साध्यव्यापकत्वविशिष्टसाधनाव्यापक-त्वम् । अत्र साध्यव्यापकत्वे सतीति विशेषणानुपादाने शब्दोऽनित्यः कार्यत्वादित्यत्र सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रिय-ग्रहणयोग्यत्वमुपाधिः स्यात् । साधनाव्यापकत्वरूपविशेष्यो-पादाने शब्दोऽनित्यः सामान्यत्वादित्यत्र कृतकत्वमुपाधिः स्यात् अत उभयोपादानम् । उपाधिलक्षणे साध्यव्यापकत्वं हि स्वस-मानाधिकरणात्यन्ताभावप्रतियोगित्वम् । स्वपदेन साध्यस्य ग्रहणम् । पर्वतो वह्निमान् धूमादित्यत्र साध्याधिकरणपर्वतवृत्ति-जलात्यन्ताभावप्रतियोगित्वस्य धूमे सत्त्वाल्लक्षणसमन्वयः । एवं साधनाव्यापकत्वं साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वम् । साधनं धूमस्तद्वत्पर्वतनिष्ठमव्याप्यवयवेन वर्तमानवह्न्यभावप्र-तियोगित्वस्य धूमे सत्त्वाल्लक्षणसमन्वयः । पर्वतो धूमवान् वह्नि-मत्त्वादित्यत्र वह्निमत्त्वे आर्द्रेन्धनसंयोगरूपोपाधेः सत्त्वात्तस्य सोपाधिकत्वम् आर्द्रेन्धनसंयोगस्य यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति व्याप्त्या धूमाधिकरणपर्वतवृत्तिजलात्यन्ताभावाप्रतियोगि-तया, यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्त्ययोगोलके आर्द्रेन्ध-नाभावादिति व्याप्त्या वह्न्यधिकरणायोगोलकवृत्त्यभावप्रतियो-गितया साध्यव्यापकत्वे सति साधनाव्यापकत्वादुपाधित्वम् ।

बाधस्य लक्षणम् प्रदर्शयति—

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः । यथा 'वह्निरनुष्णो द्रव्यत्वात्, इत्य-**

अनुष्णत्वं साध्यम्, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम् ।

व्याख्यातमनुमानम् ।

( न्यायबो० ) यस्येति । यस्य हेतोः साध्यस्याभावःसाध्याभावः स च प्रत्यक्षप्रमाणेन निश्चितः । तथा च प्रात्यक्षिकसाध्याभावनिश्चयेनानुमितिप्रतिबन्धः ( १ ) फलम् । बाधितसाध्याव्यापकत्वाद्बाधितो हेतुरुच्यते ।

( पदकृ० ) यस्येति । सद्धेतुवारणाय 'प्रमाणान्तरेण' इति घटादिवारणाय 'साध्य' इति ।

( प्रतिबि० ) प्रमाणान्तरेण निश्चितसाध्याभाववद्धेतुत्वं बाधितलक्षणम् । वह्निरनुष्णो द्रव्यत्वादित्यत्र हेतुना साधनीयस्यानुष्णत्वस्य वह्निस्पर्शे दाहानुभवात् स्पर्शप्रत्यक्षात्मकप्रमाणान्तरबाधितो वह्नौ नानुष्णत्वं साधयतीति लक्षणसङ्गतिः । लक्षणे साध्यपदं प्रमाणान्तरेण ते च क्रमेण घटादौ सद्धेतौ चातिव्याप्तिवारणाय ।

अत्रेदं प्रासङ्गिकम् । सावान्तरैर्हेत्वाभासैः साक्षात्परम्परया वानुमितिप्रतिबन्धः क्रियते । तथा हि सव्यभिचारेण तदवान्तरभेदभूताभ्यां साधारणासाधारणाभ्यां च व्याप्तिप्रतिबन्धः क्रियते । अनुपसंहारिणा व्यतिरेकव्याप्तिप्रतिबन्धः क्रियते । विरुद्धेन साक्षादनुमितिः प्रतिबध्यते । सत्प्रतिपक्षेण विरोधिसामग्रीसम्पादकतया साक्षादनुमितिः प्रतिबध्यते । आश्रयासिद्धेः

(१) बाधस्य ग्राह्याभाववन्निश्चयत्वेन साक्षादनुमितिप्रतिबन्धकत्वं बोध्यम् ।

स्वरूपासिद्धेश्च परामर्शप्रतिबन्धः कार्यम् । व्याप्यत्वासिद्धिरप्यनुमितिप्रतिबन्धिका । बाधस्यापि साक्षादनुमितिप्रतिबन्धकत्वम् । अव्याप्त्यतिव्याप्त्यसम्भवादिदोषयुक्तं लक्षणमपि हेत्वाभास एव । अव्याप्तं लक्षणं भागासिद्धावतिव्याप्तिग्रस्तं व्याप्यत्वासिद्धावसम्भवदुष्टं स्वरूपासिद्धावन्तर्भवतीति ज्ञेयम् । अनुमितौ व्याप्तिज्ञानं करणं परामर्शो व्यापारः अनुमितिः कार्यमिति सङ्क्षेपः ।

इत्यनुमाननिरूपणम् ।

अथ उपमानम् निरूपयति–

उपमितिकरणमुपमानम् (१) संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । तथाहि-कश्चिद्गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषाद् गोसदृशो गवयः इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति तदनन्तरं गवयशब्दवाच्योऽयम् इत्युपमितिरुत्पद्यते ।

( न्यायबो० ) उपमानं लक्षयति—उपमितीति । उपमितिं लक्षयति संज्ञासंज्ञीति । संज्ञापदम् संज्ञी अर्थः तयोः सम्बन्धः शक्तिः । तथा च पदपदार्थसम्बन्धज्ञानमुपमितिः इत्यर्थः । उपमानमतिदेशवाक्यार्थज्ञानम् । अतिदेशवाक्यार्थस्मरणं

( १ ) उपमीयतेऽनेनेत्युपमानमिति कश्चित् ।

व्यापारः। गोसदृशो गवयपदवाच्यः इत्याकारकात् गोसदृशत्वावच्छिन्नविशेष्यकगवयपदवाच्यत्वप्रकारकज्ञानं जायते तदेव करणम्।

( पदकृ० ) अवसरसंगतिमभिप्रेत्यानुमानानन्तरम् उपमानं निरूपयति—उपमितीति। उपमितेः करणमुपमानमित्यर्थः। कुठारादिवारणाय 'मिति' इति। प्रत्यक्षादिवारणाय 'सम्बन्ध, इति। संयोगादिवारणाय'संज्ञासंज्ञि,इति। अयं गवयपदवाच्यः इति। अभिप्रेतगवयो गवयपदवाच्यः इत्यर्थः। तेन गवयान्तरे शक्तिग्रहाभावप्रसंगः इति दूषणमपास्तम्। तथा च गोसादृश्यविशिष्टपिण्डज्ञानं करणम्। अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः। उपमितिः फलम् इति सारम्। तच्चोपमानं त्रिविधम्—सादृश्यविशिष्टपिण्डज्ञानम् असाधारणधर्मविशिष्टपिण्डज्ञानम् वैधर्म्यविशिष्टपिण्डज्ञानं च। तत्राद्यमुक्तमेव द्वितीयं यथा खड्गमृगः कीदृक् इति पृष्टे 'नासिकालसदेकशृङ्गोऽनतिक्रान्तगजाकृतिश्च, इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशपिण्डं पश्यन्नतिदेशवाक्यार्थं स्मरति तदनन्तरं खड्गमृगः खड्ग पदवाच्यः इत्युपमितिरुत्पद्यते। अत्र नासिकालसदेकशृङ्गः इत्यसाधारणधर्मः तृतीयं यथा—उष्ट्रः कीदृक् इति पृष्टे अश्वादिवदसमानपृष्ठो न ह्रस्वग्रीवशरीरश्च इति आप्तोच्चारिते कालान्तरेण तत्पिण्डदर्शनाद्वैधर्म्यविशिष्टपिण्डज्ञानम्, ततोऽतिदेशवाक्यार्थं स्मरणम्, ततः उष्ट्रः उष्ट्रपदवाच्य इत्युपमितिरुत्पद्यते।

( प्रतिबि० ) उपमितेः करणमिति व्युत्पत्त्योपमित्यसाधारणाकारणत्वमुपमानस्य लक्षणम् । करणमुपमानमित्युच्यमाने कुठारादावतिप्रसंगः स्यादत उक्तमुपमितिकरणम् । उपमितिश्च संज्ञासंज्ञिसम्बन्धज्ञानम् । संज्ञा गवयपदं संज्ञी गवयस्तयोः सम्बन्धः शक्तिरूपः । अनुमिनोमीत्यनुव्यवसायगम्योपमितित्वं लक्षणम् । संयोगादौ प्रत्यक्षादौ चातिव्याप्तिवारणाय क्रमेण संज्ञासंज्ञिपदं सम्बन्धपदं च । उपमितेः करणं च सादृश्यज्ञानम् । तथा च सादृश्यज्ञानमुपमानमिति फलितम् । तथा हि कश्चिद्गवयपदार्थानभिज्ञो नागरिकः कस्मादप्यारण्यकपुरुषाद्गोसदृशो गवय इति वाक्यं श्रुत्वा कार्यवशाद्वनं प्राप्तो गोसदृशो गवय इति वाक्यार्थं स्मरन् गोसदृशपिण्डं पश्यति । तदनन्तरं तस्य पुरुषस्याभिप्रेतगवयपदवाच्योऽयं मांसपिण्ड इत्युपमितिर्भवति । उपमितावुपमानं करणं संज्ञासंज्ञिसम्बन्धज्ञानमवान्तरव्यापार उपमितिः कार्यमिति विवेकः ।

अथ शब्दस्य लक्षणम् प्रदर्शयति—

## आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता वाक्यं पदसमूहः । यथा—'गामानय' इति शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्यः इतीश्वरसंकेतः शक्तिः ।

( न्यायबो० ) शब्दं लक्षयति–आप्तेति । पदज्ञानं करणम् वृत्तिज्ञानकृतपदज्ञातजन्यपदार्थोपस्थितिर्व्यापारः वाक्यार्थज्ञानं फलम् तच्छाब्दबोधः । वृत्तिर्नाम शक्तिलक्षणान्यतररूपा ।

शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतो नामेश्वरेच्छा। सैव शक्तिरित्यर्थः। शक्तिनिरूपकत्वमेव पदं शक्तत्वम्। विषयतासम्बन्धेन शक्त्याश्रयत्वं शाब्दत्वम्। शक्यसम्बन्धो लक्षणा। सा द्विधा—गौणी शुद्धा चेति। गौणी नाम सादृश्यविशिष्टलक्षणा। यथा-सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा। शुद्धाऽपि द्विविधा—जहल्लक्षणा अजहल्लक्षणा चेति लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका जहल्लक्षणा। यथा'गङ्गायां घोषः' इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धलक्षणाज्ञानात् गंगापदात्तीरोपस्थितिः। लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका अजहल्लक्षणा यथा—'काकेभ्यो दधि रक्ष्यताम्, इत्यत्र काकपदस्य दध्युपघातके लक्षणा। लक्ष्यतावच्छेदकत्वं दध्युपघातकत्वं तेन रूपेण दध्युपघातकानां काकविडालकुक्कुरादीनां शक्यलक्ष्याणां सर्वेषां बोधात्। इयमेव जहल्लक्षणा वेदान्तिमते।

( पदकृ० ) अवसरसङ्गतिमभिप्रेत्योपमानानन्तरं शब्दं लक्षयति—आप्तेति। शब्द इति। शब्दप्रमाणमित्यर्थः। भ्रान्तविप्रलम्भकयोर्वाक्यस्य शुद्धप्रमाणत्ववारणाय 'आप्त' इति। ननु कोऽयमाप्तः इत्यत आह—आप्तस्त्विति। यथार्थवक्ता यथा भूतावोधितार्थोपदेष्टा। वाक्यं लक्षयति-वाक्यमिति घटादिसमूहवारणाय पद इति। शक्तमिति निरूपकतासम्बन्धेन शक्तिविशिष्टम् इत्यर्थः। अस्मादिति 'घटपदाद्घटरूपाऽर्थो वोद्धव्यः' इतीश्वरेच्छैव शक्तिः इत्यर्थः। अर्थस्मृत्यनुकूलपदार्थसम्बन्धत्वं तल्लक्षणम्। शक्तिरिव लक्षणा अपि पदवृत्तिः अथ केयं लक्षणा-शक्यसम्बन्धो लक्षणा। सा च त्रिधा-जहत्-अजहत्-जहदजहद्भेदात्।वर्तते च'गंगायां घोषः'इत्यत्र गंगापदशक्यप्रवाहसम्बन्धस्तीरे। लक्षणाबीजं च तात्पर्यानुपपत्तिःअत

( प्रतिबि० ) उपमितेः करणमिति व्युत्पत्त्योपमित्यसाधारणकारणत्वमुपमानस्य लक्षणम् । करणमुपमानमित्युच्यमाने कुठारादावतिप्रसंगः स्यादत उक्तमुपमितिकरणम् । उपमितिश्च संज्ञासंज्ञिसम्बन्धज्ञानम् । संज्ञा गवयपदं संज्ञी गवयस्तयोः सम्बन्धः शक्तिरूपः । अनुमिनोमीत्यनुव्यवसायगम्योपमितित्वं लक्षणम् । संयोगादौ प्रत्यक्षादौ चातिव्याप्तिवारणाय क्रमेण संज्ञासंज्ञिपदं सम्बन्धपदं च । उपमितेः करणं च सादृश्यज्ञानम् । तथा च सादृश्यज्ञानमुपमानमिति फलितम् । तथा हि कश्चिद्गवयपदार्थानभिज्ञो नागरिकः कस्मादप्यारण्यकपुरुषाद्गोसदृशो गवय इति वाक्यं श्रुत्वा कार्यवशाद्वनं प्राप्तो गोसदृशो गवय इति वाक्यार्थं स्मरन् गोसदृशपिण्डं पश्यति । तदनन्तरं तस्य पुरुषस्याभिप्रेतगवयपदवाच्योऽयं मांसपिण्ड इत्युपमितिर्भवति । उपमितावुपमानं करणं संज्ञासंज्ञिसम्बन्धज्ञानमवान्तरव्यापार उपमितिः कार्यमिति विवेकः ।

अथ शब्दस्य लक्षणम् प्रदर्शयति—

**आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता वाक्यं पदसमूहः । यथा—'गामानय' इति शक्तं पदम् । अस्मात्पदादयमर्थो बोद्धव्यः इतीश्वरसंकेतः शक्तिः ।** ५८

( न्यायबो० ) शब्दं लक्षयति–आप्तेति । पदज्ञानं करणम् वृत्तिज्ञानकृतपदज्ञातजन्यपदार्थोपस्थितिर्व्यापारः वाक्यार्थज्ञानं फलम् तच्छाब्दबोधः । वृत्तिर्नाम शक्तिलक्षणान्यतररूपा ।

 

शक्तिर्नाम घटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतो नामेश्वरेच्छा। सैव शक्तिरित्यर्थः। शक्तिनिरूपकत्वमेव पदं शक्तत्वम्। विषयतासम्बन्धेन शक्त्याश्रयत्वं शाब्दत्वम्। शक्यसम्बन्धो लक्षणा। सा द्विधा—गौणी शुद्धा चेति। गौणी नाम सादृश्यविशिष्टलक्षणा। यथा–सिंहो माणवक इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा। शुद्धाऽपि द्विविधा—जहल्लक्षणा अजहल्लक्षणा चेति लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका जहल्लक्षणा। यथा'गङ्गायां घोषः' इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धलक्षणाज्ञानात् गंगापदात्तीरोपस्थितिः। लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका अजहल्लक्षणा यथा—'काकेभ्यो दधि रक्ष्यताम्, इत्यत्र काकपदस्य दध्युपघातके लक्षणा। लक्ष्यतावच्छेदकत्वं दध्युपघातकत्वं तेन रूपेण दध्युपघातकानां काकविडालकुक्कुरादीनां शक्यलक्ष्याणां सर्वेषां बोधात्। इयमेव जहल्लक्षणा वेदान्तिमते।

(पदकृ०) अवसरसङ्गतिमभिप्रेत्योपमानानन्तरं शब्दं लक्षयति—आप्तेति। शब्द इति। शब्दप्रमाणमित्यर्थः। भ्रान्तविप्रलम्भकयोर्वाक्यस्य शुद्धप्रमाणत्ववारणाय 'आप्त' इति। ननु कोऽयमाप्तः इत्यत आह—आप्तस्त्विति। यथार्थवक्ता यथा भूताबोधितार्थोपदेष्टा। वाक्यं लक्षयति–वाक्यमिति घटादिसमूहवारणाय पद इति। शक्तमिति निरूपकतासम्बन्धेन शक्तिविशिष्टम् इत्यर्थः। अस्मादिति 'घटपदाद्घटरूपाऽर्थो बोद्धव्यः' इतीश्वरेच्छैव शक्तिः इत्यर्थः। अर्थस्मृत्यनुकूलपदार्थसम्बन्धत्वं तल्लक्षणम्। शक्तिरिव लक्षणा अपि पदवृत्तिः अथ केयं लक्षणा–शक्यसम्बन्धो लक्षणा। सा च त्रिधा–जहत्-अजहत्–जहदजहद्भेदात्। वर्तते च'गंगायां घोषः'इत्यत्र गंगापदशक्यप्रवाहसम्बन्धस्तीरे। लक्षणाबीजं च तात्पर्यानुपपत्तिःअत

एव प्रवाहे घोषतात्पर्यानुपपत्तेस्तीरे लक्षणा सेत्स्यति। छत्रिणो यान्ति इत्यादौ द्वितीया। 'सोऽयमश्वः' इत्यादौ तृतीया।

( प्रतिवि० ) आप्तोच्चरितत्वं शब्दप्रमाणलक्षणम्। भ्रान्तवाक्ये विप्रलम्भकवाक्ये चातिव्याप्तिवारणायाप्त इति। प्रकृतवाक्यार्थविषयकयथार्थज्ञानजनकं वाक्यं शब्द इति परमार्थः। यथार्थवक्तृत्वमाप्तलक्षणम्। यथावस्थिताबाधितार्थोपदेष्टृत्वमिति यावत्। यथा पयसा सिञ्चतीत्याद्युपदेष्टुः। वाक्यं पदसमूहः'। समूहो वाक्यमित्युक्ते घटादावतिव्याप्तिरत उक्तं पदसमूह इति। शक्तं शक्तिविशिष्टमिति व्युत्पत्तेर्निरूपकत्वसम्बन्धेन शक्तिविशिष्टत्वं पदलक्षणम्। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरसङ्केतःशक्तिः। शक्तिलक्षणं त्वर्थस्मरणानुकूलपदार्थसम्बन्धत्वम्। शब्दप्रमाणे पदज्ञानं करणं वृत्तिज्ञानजन्यपदार्थोपस्थितिर्व्यापारः शाब्दबोधः कार्यम्। वृत्तिश्च शक्तिलक्षणाभेदेन द्विधा। घटपदाद् घटो बोध्य इतीश्वरेच्छा शक्तिः। शक्तेरवच्छेदकं शक्तत्वं शक्यत्वं च। शक्तिनिरूपकत्वं शक्तत्वम्। शक्तिविषयत्वं शक्यत्वम् शक्यसम्बन्धो लक्षणा। जहदजहज्जहदजहद्भेदाल्लक्षणा त्रिधा जहति शक्यमर्थमिति व्युत्पत्त्या लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका जहल्लक्षणा। गङ्गायां घोष इत्यत्र गंगापदशक्यप्रवाहरूपार्थत्यागेन तीरे लक्षणा। तात्पर्यानुपपत्तेर्लक्षणाबीजत्वेन प्रवाहे तात्पर्यबोधात् न जहति शक्यमर्थमिति व्युत्पत्त्या लक्ष्यतावच्छेदकरूपेण शक्यलक्ष्योभयबोधप्रयोजिका अजहल्लक्षणा। छत्रिणो यान्तीत्यत्र छत्र्यच्छत्र्युभयसमुदाये लक्ष्यतावच्छेदकछत्रित्वरूपेण शक्य-

लक्ष्योभयबोधोऽजहल्लक्षणया। विशिष्टार्थबोधकस्यैकदेशत्याग-पूर्वकैकदेशवृत्तित्वे जहदजहल्लक्षणा। सोऽयं देवदत्त इत्यत्र तत्पददेवदत्तपदयोरैक्यानुपपत्त्या किञ्चित् किञ्चिदर्थपरित्यागेन विशेष्यमात्रबोधो जहदजहल्लक्षणया।

शाब्दबोधे कारणानि निरूप्यन्ते—

**आकाङ्क्षायोग्यतासन्निधिश्च वाक्यार्थज्ञाने हेतुः।**

(प्रतिवि०) आकाङ्क्षा योग्यता सन्निधिज्ञानं च शाब्दबोधे कारणम्।

आकांक्षायोग्यतासन्निधीनां लक्षणानि प्रदर्श्यन्ते—

**पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः (१)। तथाचाकाङ्क्षादिरहितं वाक्यं प्रमाणम्। यथा गौरश्वः पुरुषो हस्ती इति न प्रमाणम् आकाङ्क्षाविरहात्। वह्निना सिञ्चेत् इति न प्रमाणम् योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि 'गाम् आनय, इत्यादि पदानि न प्रमाणम् सान्निध्याभावात्।**

( न्यायबो० ) आकाङ्क्षां लक्षयति—पदस्येति । यत्पदविशेष्यकाव्यवहितोत्तरत्वादिसम्बन्धेन यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावः, तादृशशाब्दबोधे तत्पदवत्त्वम् आकाङ्क्षा । तादृशाकाङ्क्षाज्ञानं शाब्दबोधे कारणम् । अर्थाबाध इति । 'बाधाभावो योग्यता' इत्यर्थः । 'अग्निना सिञ्चेत्' इत्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वात्तादृशवाक्याच्छाब्दबोधो न संभवति । आसत्तिं निरूपयति—पदानामिति । असहोच्चारितानि विलम्बेनोच्चारितानि ।

( पदकृ० ) पदस्येति । असम्भववारणाय 'पदान्तरव्यतिरेकप्रयुक्त' इति । पुनरसम्भववारणाय 'पदान्तर' इति । पदानामिति । असहोच्चारितेष्वतिव्याप्तिवारणाय 'अविलम्बेन' इति । आकाङ्क्षावारणाय 'पदानाम्' इति । आकाङ्क्षादिशून्यस्य वाक्यस्यात्र प्रमाणत्वं निषेधयति—तथा चेति 'आकाङ्क्षादिकं शाब्दहेतुः, इत्युक्ते चेत्यर्थः । अनाकाङ्क्षाद्युदाहरणं दर्शयति—यथेति ।

( प्रतिवि० ) यस्य पदस्य पदान्तराभावप्रयुक्तान्वयाभावप्रयोजकत्वं तत्पदवत्त्वमाकाङ्क्षा । बाधाभाववत्त्वं योग्यता । यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृततत्पदत्वमाकाङ्क्षालक्षणम् । द्वारं पिधेहीत्यत्रान्यतरमात्रप्रयोगेऽन्यतरस्यान्यपदाभावप्रयुक्तमन्वयबोधाजनकत्वं वर्तत इति द्वारपदसमभिव्याहृतपिधेहिपदत्वरूपाकाङ्क्षायुक्तत्वाद्वाक्यं प्रमाणम् । बाधाभाववत्त्वं योग्यता । पयसा सिञ्चतीत्यत्र पयसि द्रवद्रव्यत्वरूपसेककरणार्थस्याबाधितत्वाल्लक्ष-

णसमन्वयः। अविलम्बेन पदार्थोपस्थितित्वं सन्निधिः। यथा घटमानयेत्यादि आकाङ्क्षादित्रितयशून्यं वाक्यमप्रमाणम्। प्रत्येकमनाकाङ्क्षितत्वाद्गौरश्व इत्यादि न प्रमाणम्। वह्नौ सेककरणयोग्यताविरहाद्वह्निना सिञ्चतीति न प्रमाणम्। पदार्थानां विलम्बेनोपस्थानात् प्रहरे प्रहरे उच्चारितानि गां आनय इत्यादीनि न प्रमाणानि आकाङ्क्षादियुक्तवाक्याच्छाब्दबोधप्रकारश्चैवम्। घटमानयेत्यत्र घटपदार्थस्य घटस्य निष्ठतात्वसंबन्धेन नामार्थे कर्मत्वेऽन्वयः। आङुपपदस्य नयतेरानयनम्। तत्र निरूपकतासम्बन्धेन कर्मत्वान्वयः। कृतिराख्यातार्थः। आश्रयतया तस्याः पुरुषेऽन्वयः। एवञ्च घटनिष्ठकर्मतानिरूपकानुकूलकृतिमांश्चैत्र इत्यादिः।

वाक्यभेदं प्रदर्शयति—

**वाक्यं द्विधा—वैदिकं लौकिकञ्चेति। वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्यदप्रमाणम्।**

( न्यायबो० ) वैदिकम् 'वेदवाक्यम्' इत्यर्थः। इदमुपलक्षणम् वेदमूलकस्मृत्यादीन्यपि ग्राह्याणि। लौकिकं त्विति। आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्।

( प्रतिबि० वैदिकं लौकिकं चेति। प्रकारभेदाद्वाक्यं द्विविधम्। ईश्वरोक्तत्वं वैदिकत्वम्। तच्च सर्वमेव प्रमाणं सर्वज्ञेश्वरेणोक्तत्वात्। वेदमूलकमपि वैदिकवत्प्रमाणम्। अत एव मन्वादिस्मृतीनां प्रामाण्यम्। वेदःपौरुषेयः पदसमूहत्वाद् भारतादिवदित्यनुमानेन वेदस्येश्वरप्रणीतत्वम्। प्रयोगहेतुभूतयथा-

र्थज्ञानवत्पुरुषप्रयुक्तं लौकिकवाक्यं प्रमाणम्। रथ्यापुरुषप्रयुक्तमप्रमाणम्।

शाब्दज्ञानं निरूपयति—

**वाक्यार्थज्ञानं शाब्दज्ञानम्। तत्करणं शब्दः।**

( न्यायबो० ) गामानयेत्यादौ वृद्धव्यवहारे सर्वत्रानयनादेर्व्यक्तावेव संभवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात्। शक्तिग्रहश्च वृद्धव्यवहारेण। तथाहि व्युत्पित्सुर्बालो गामानयेत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्याश्वमानय गां बधान इति वाक्यान्तरस्य बोधो जायते इति।

(पदकृ०) नन्वेतावता शाब्दसामग्री प्रपञ्चिता। प्रमाविभाजकवाक्ये शब्दस्याप्युद्दिष्टत्वेन तत्कुतो न प्रदर्शितम्' इत्यत आह—'वाक्यार्थेति। शब्दत्वं च 'शब्दात्प्रत्येमि' इत्यनुभवसिद्धा जातिः। शाब्दबोधक्रमो यथा—'चैत्रो ग्रामं गच्छति' इत्यत्र 'ग्रामकर्मकगमनानुकूलवर्तमानकृतिमान्' इति शाब्दबोधः। द्वितीयायाः कर्मत्वमर्थः धातोर्गमनम् अनुकूलत्वं च संसर्गमर्यादया भासते, लटो वर्तमानत्वम्, आख्यातस्य कृतिः, तत्संबन्धासंसर्गमर्यादया भासते। 'रथो गच्छति' इत्यत्र 'गमनानुकूलव्यापारवान् रथः, इति शाब्दबोधः। 'स्नात्वा गच्छति' इत्यत्र गमनप्रागभावावच्छिन्नकालीनस्नानकर्ता गमनानुकूलवर्तमा-

नक्रतिमान्' इति शाब्दबोधः । क्त्वाप्रत्ययस्य कर्त्ता पूर्वकालीनत्वं चार्थः । एवमन्यत्रापि वाक्ये बोध्यम् ।

( प्रतिवि० ) वाक्याद्यदर्थज्ञानं भवति तच्छाब्दं ज्ञानम् । शाब्दात्प्रत्येमीत्यनुभवसिद्धजातित्वं शाब्दत्वम् । शाब्दज्ञानासाधारणकारणं च शब्दः ।

इति शाब्दनिरूपणम् ।

अयथार्थानुभवस्य भेदं निरूपयति—

**अयथार्थानुभवस्त्रिधा—संशयविपर्ययतर्कभेदात् ।**

( प्रतिवि० ) संशयो विपर्ययस्तर्कश्चेति भेदादयथार्थानुभवस्त्रिधा ।

संशयं प्रदर्शयति—

**एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं संशयः (१) । यथा—'स्थाणुर्वा पुरुषो वा' इति ।**

---

( १ ) स च संशयोऽपि साधारणधर्मधीजन्यत्वेनासाधारणधर्मधीजन्यत्वेन विप्रतिपत्तिजन्यत्वेन च त्रिविधो भवति कोटिद्वयस्मरणपूर्वकविशेषादर्शनंसंशयमात्रे हेतुः। अत्राद्यस्य मूले एवोदाहरणं साधारणधर्मत्वपुरुषत्वनिश्चायककरादिमत्त्वं स्थाणुत्वनिश्चायकवक्रकोटरादिमत्त्वमिति । द्वितीयो यथा शब्दत्वं नित्यानित्यव्यावृत्तशब्दमात्रवृत्तीति ज्ञानेन शब्दो नित्यो नवेति संशयः । तृतीयो यथा प्रामाण्यं स्वतो ग्राह्यं परतो वेति संशय इति ।

( न्यायबो० ) यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते- संशय इत्यादिना। एकेति। एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारकं ज्ञानं संशयः।भावद्वयकोटिकसंशयाप्रसिद्धेः 'स्थाणुर्वा' इत्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्वाभाव एककोटिक एव।

( पदकृ० ) अयथार्थानुभवं विभजते—अयथार्थ इति। संशयं लक्षयति एकेति। एकस्मिन्धर्मिण्येकस्मिन्पुरोवर्तिनि पदार्थे विरुद्धा व्यधिकरणा नानाधर्माः स्थाणुत्वपुरुषत्वादयस्तेषां वशिष्ट्यं सम्बन्धः'तदवगाहिज्ञानं संशयः इत्यर्थः। घटादौ इति। समूहालम्बनज्ञानस्य घटत्वपटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यानवगाहित्वादतिप्रसक्तिवारणाय एकस्मिन्निति। 'घटः पृथिवी' इति ज्ञानस्यैकस्मिन्धर्मिणि घटे घटत्वपृथिवीत्वरूपनानाधर्मवैशिष्ट्याऽवगाहित्वादतिप्रसङ्गवारणाय 'विरुद्ध' इति। घटत्वविरुद्धपटत्ववान्पटः इति ज्ञानेऽतिप्रसक्तिवारणाय 'नाना' इति।

( प्रतिबि० ) एकस्मिन् पदार्थे विरुद्धानां स्थाणुत्वादिनानाधर्माणां यद्वैशिष्ट्यं सम्बन्धस्तदवगाहिज्ञानम्। एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारकज्ञानत्वं संशयलक्षणम्। स्थाणुर्वा पुरुषो वेत्यत्र पुरोवर्तिनि पदार्थे स्थाणुत्वव्याप्यनिश्चलत्वव्याप्यकरचरणादिमत्त्वरूपविरुद्धनानाधर्मसम्बन्धदर्शनाल्लक्षणसमन्वयः। धर्मिणि विरुद्धनानाधर्मेत्याद्युक्तौ घटपटाविति समूहालम्बनज्ञानस्य घटत्वपटत्वादिविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसङ्गस्तद्वारणायैकस्मिन्निति। एकस्मिन् धर्मिणि नानाधर्मेत्यादिलक्षणकरणे पटः पृथिवीति ज्ञान-

स्य पटत्वपृथिवीत्वरूपनानाधर्मवत्त्वात् संशयत्वं स्यादत उक्तं विरुद्ध इति । द्रव्यत्वविरुद्धघटत्ववान् घट इति ज्ञानेऽतिव्याप्तिवारणाय नानापदम् ।

विपर्ययं निरूपयति—

## मिथ्याज्ञानं विपर्ययः । यथा 'शुक्तौ रजतम्' इति ।

( न्यायबो० ) मिथ्याज्ञानमिति । अयथार्थज्ञानम्' विपर्ययो नाम 'भ्रम' इत्यर्थः ।

( पदकृ० ) मिथ्येति । यथार्थज्ञानवारणाय 'मिथ्या' इति । अयथार्थवारणाय 'ज्ञान' इति ।

( प्रतिबि० ) अयथार्थज्ञानत्वं विपर्ययलक्षणम् । मिथ्यापदं यथार्थज्ञानवारणाय । अयथार्थवारणाय ज्ञानपदम् । शुक्तौ चाकचक्यादिना जायमानं रजतज्ञानमयथार्थत्वाद् भ्रमः ।

तर्कं प्रदर्शयति—

## व्याप्यारोपेण (१) व्यापकारोपस्तर्कः । यथा 'यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यात् इति ।

---

( १ ) व्याप्यस्यारोप आहार्य्यज्ञानम् तच्च बोधकालीनेच्छाजन्यं तेनापादितो यो व्यापकस्यारोपः स तर्क इत्यर्थः उदाहरणं च यदि वह्निर्न स्यादिति

( न्यायबो० ) व्याप्यारोपेणेति। तर्के (१) व्याप्यस्य व्यापकस्य च व्यतिरेकविधिनिश्चयः कारणम्। अन्यथा (२) बाधनिश्चयाभावे इष्टा (३) पत्तिदोषेण तर्केति आपाद्यव्यतिरेकनिश्चयः (४)।

( पदकृ० ) व्याप्येति। असम्भववारणाय 'व्याप्यारोपेण' इति। पुनरसंभववारणाय व्यापकारोप इति। अत्र वह्न्यभावो व्याप्यः, धूमाभावो व्यापकः, यद्यपि तर्कस्य विपर्ययात्मकत्वेन पृथग्विभागोऽनुचितः। तथापि प्रमाणानुग्राहकत्वात् स उचित इति बोद्धव्यम्। स्वप्नस्तु पुरीतद्बहिर्देशान्तर्देशयोः सन्धौ इडानाड्यां वा मनसि स्थिते, अदृष्टविशेषेण धातुदोषेण वा जन्यते स च मानसविपर्ययान्तर्भूतः।

---

अत्र हि वह्न्यभावरूपव्याप्यस्यारोपेण व्यापको धूमाभाव आरोप्यते। व्यापकत्वमधिकदेशवृत्तित्वम्। व्याप्यत्वं चाल्पदेशवृत्तित्वम्। अस्ति चैतदयोगोलकाधिकरणवृत्तिसत्त्वासत्त्वेन धूमाभाववह्न्यभावयोरिति। एतादृशरूपेणास्य विषयपरिशोधकत्वम्। व्यभिचारसंशयनिवर्तनत्वं तु यदि धूमो वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादित्येतादृशरूपेणेति। अत्रापि वह्निव्यभिचारित्ववह्निजन्यत्वाभावव्याप्यत्वमिति बोध्यम्।

( १ ) अयम्भावः यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादित्यादिस्थले व्याप्यस्य वह्न्यभावस्य व्यापकस्य धूमाभावस्य च व्यतिरेकविधिनिश्चयो धूमसत्त्वेन वह्निसत्त्वनिश्चयः कारणमित्यर्थः।

( २ ) आहार्यज्ञानरूपव्यापकयोर्विपरीतबाधनिश्चयाभावे।

( ३ ) धूमोऽपि मा भवत्वितीष्टापत्तिदोषेणेत्यर्थः।

( ४ ) तर्कस्वरूपानुपपत्तेरित्यर्थः

( प्रतिवि० ) व्याप्यस्य बाधकालीनेच्छाजन्यज्ञानरूपस्याहार्यस्यारोपेण यो व्यापकस्यारोप इति व्युत्पत्त्या आहार्यारोपप्रयुक्तव्यापकारोपविषयत्वं तर्कलक्षणम् । यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादित्यत्र वह्न्यभावरूपव्याप्यारोपेण व्यापकस्य धूमाभावस्यारोपाल्लक्षणसमन्वयः । असम्भववारणाय लक्षणे व्याप्यारोपेण व्यापकारोप इत्युक्तम् ।

स्मृतेः भेदं प्रदर्शयति—

**संस्कारजन्यं ज्ञानं स्मृतिः। सा द्विधा यथार्थाऽयथार्था च। प्रमाजन्या यथार्था। अप्रमाजन्याऽयथार्था।**

( पदकृ० )प्रामाण्यानुग्राहकत्वं प्रमाणेन प्रमायां जननीयायां प्रतिबन्धकविघटनद्वारोपयोगित्वम् ।

( प्रतिवि० ) यथार्थायथार्थभेदात् स्मृतिर्द्विविधा । यथार्था स्मृतिः प्रमाजन्या । अयथार्था स्मृतिरप्रमाजन्या ।

सुखं निरूपयति—

**सर्वेषामनुकूलवेदनीयं सुखम् ।**

( न्यायबो० ) सुखं निरूपयति—अनुकूलेति । इतरेच्छा(१)नधीनेच्छाविषयत्वम् इति निष्कर्षः । यथा श्रुते अनु-

---

( १ ) सुखं विहाय सर्वत्र धनधान्यादौ सुखेच्छाधीनेच्छाविषयत्वं सुखे चान्येच्छानधीनेच्छाविषयत्वं न हि सुखमप्यन्यार्थमपेक्षते ।

कूलत्वप्रकारकवेदनीयत्वस्य ( वेदनाविशेष्यत्वस्य ) 'घटोऽनुकूलः, इत्याकारकज्ञानदशायामनुकूलप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद्घटादावतिव्याप्तिः,—इति निष्कृष्टलक्षणमुक्तम् । भोजनादावतिव्याप्तिवारणाय 'इतरेच्छानधीन, इतीच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ।

( पदकृ० ) सुखं निरूपयति सर्वेषामिति । सर्वात्मनाम् 'अनुकूलम्, इति वेद्यं यत् तत्सुखम् इत्यर्थः। 'अहं सुखी, इत्यनुभवसिद्धसुखत्वजातिमद्धर्ममात्रासाधारणकारणगुणो वा सुखम् । शत्रुदुःखवारणाय 'सर्वेषाम्, इति ।

( प्रतिवि० ) सर्वेषां जीवानामनुकूलत्वेन वेदनीयं यत्तत्सुखम् । सुख्यहमित्यनुभवसिद्धसुखत्वजातिमत्त्वं,धर्ममात्रासाधारणकारणगुणत्वं वा सुखलक्षणम् । इतरेच्छानधीनेच्छाविषयत्वमिति परमार्थः।धनादीनांसुखार्थत्वात् सुखेच्छाधीनेच्छाविषयत्वेऽपि सुखस्यान्यार्थत्वाभावादितरेच्छानधीनेच्छाविषयत्वम् ।

दुःखं निरूपयति—

## प्रतिकूलतया वेदनीयं दुःखम् ।

( न्यायबो० ) दुःखं निरूपयति प्रतिकूलेति । अत्रापि इतरद्वेषाधीनद्वेषविषयत्वम् इति निष्कृष्टलक्षणम् द्वेषविषयत्वमात्रोक्तौ सर्पादावतिव्याप्तिः, तद्वारणाय, इतरद्वेषाधीन—इति । द्वेषविशेषणम् । सर्पजन्यदुःखादौ द्वेषात् सर्पेऽपि द्वेष इति सर्पस्य सर्पजन्यदुःखादौ द्वेषविषयत्वात् । अन्यद्वेषाधीनद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः । फलेच्छा

उपायेच्छां प्रति कारणम् । अतः फलेच्छावशादुपायेच्छा भवति एवं फले द्वेषादुपाये द्वेषः ।

( पदकृ० ) प्रतिकूलेति । दुःखत्वजातिमद् अधर्ममात्रासाधारणकारणं गुणो वा दुःखम् । अन्यत् पूर्ववत् ।

( प्रतिबि० ) सर्वात्मनां प्रतिकूलत्वेन वेदनीयं दुःखम् । अहं दुःखीत्यनुभवसिद्धदुःखत्वजातिमत्त्वं, अधर्ममात्रासाधारणकारणगुणत्वं वा दुःखलक्षणम् । इतरद्वेषाधीनद्वेषविषयत्वमिति परमार्थः। सर्पादावतिव्याप्तिवारणायेतरद्वेषाधीन इति ।

इच्छाद्वेषप्रयत्नलक्षणानि प्रदश्यन्ते—

## इच्छा कामः। क्रोधो द्वेषः । कृतिः प्रयत्नः ।

( पदकृ० ) इच्छां निरूपयति—इच्छेति । 'कामः' इति पर्यायः इच्छात्वजातिमती इच्छा । सा द्विधा—फलेच्छा उपायेच्छा च । फलम् सुखादिकम् । उपायो यागादिः द्वेषं निरूपयति—क्रोध इति । 'द्वेष्मि' इत्यनुभवसिद्धद्वेषत्वजातिमान् द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः । प्रयत्नं निरूपयति—कृतिरिति । प्रयत्नत्वजातिमान् प्रयत्नः । स त्रिविधः प्रवृत्तिनिवृत्तिजीवनयोनिभेदात् । इच्छाजन्यो गुणः प्रवृत्तिः । द्वेषजन्यो गुणो निवृत्तिः । जीवनादृष्टजन्यो गुणो जीवनयोनिः । स च प्राणसञ्चारकारणम् ।

( प्रतिबि० ) इच्छात्वजातिमत्त्वमिच्छाया लक्षणम् । फलेच्छोपायेच्छाभेदादिच्छा द्विधा । सुखदुःखादिफलं तदिच्छा उपायः सुखादिसाधनं यागव्यापारादिस्तदिच्छोपायेच्छा ।

द्वेषत्वजातिमत्त्वं द्वेषलक्षणम् । प्रयत्नत्वजातिमत्त्वं प्रयत्नस्य लक्षणम् ।

धर्मं निरूपयति—

**विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्योऽधर्मः ।**

( न्यायबो० ) धर्माधर्मौ निरूपयति–विहितेति । वेदविहित इत्यर्थः । निषिद्धेति । 'वेदनिषिद्ध, इत्यर्थः ।

( पदकृ० ) धर्ममाह– विहितेति । 'वेदविहित' इत्यर्थः । अधर्मवारणाय 'वेदविहित' इति । योगादिक्रियावारणाय 'कर्मजन्य' इति स च कर्मनाशाजलस्पर्शकीर्तन( १ ) भोगतत्त्वज्ञानादिना नश्यति । अधर्मलक्षणमाह–निषिद्धेति । 'वेदेन' इत्यर्थः । (२) धर्मवारणाय 'वेदनिषिद्ध, इति । वेदनिषिद्धक्रियावारणाय 'कर्मजन्य, इति स च भोगप्रायश्चित्तादिना नश्यति । एतावेव अदृष्टम् इति कथ्यते, वासनाजन्यौ च । वासना च विलक्षणसंस्कारः ।

( प्रतिबि० ) वेदविहितकर्मजन्यत्वं धर्मलक्षणम् । अधर्मे क्रियायां चातिव्याप्तिवारणाय क्रमेण वेदविहित इति च । भोगकीर्तनतत्त्वज्ञानादिना तन्नाशः । वेदनिषिद्धकर्मजन्यत्वमधर्मलक्षणम् । धर्मे क्रियायां चातिप्रसङ्गवारणाय क्रमेण वेदनिषिद्ध इति कर्मजन्य इति च प्रायश्चित्तभोगाभ्यां पापक्षयः ।

---

( १ ) कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनादित्युक्तेरिति ।

( २ ) मा हिंस्यादिति निषिद्धहिंसादिकर्मजन्यम् ।

 

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः। बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ।

( न्यायबो० ) बुद्ध्यादयोऽष्टाविति । बुद्धिसुखदुःखद्वेषप्रयत्नधर्माधर्मसंस्कारा इत्यर्थः ।

( प्रतिबि० )बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्या अष्टावात्ममात्रवृत्तयो विशेषगुणाः । बुद्धीच्छाप्रयत्नाश्च नित्यानित्यभेदाद्द्विधा । ईश्वरस्य बुद्धीच्छाप्रयत्ना नित्याः । जीवस्य बुद्धीच्छाप्रयत्ना अनित्याः ।

संस्कारलक्षणं तद्भेदान् वृत्तींश्च निरूपयति–

संस्कारस्त्रिविधः—वेगो भावना स्थितिस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभवजन्या स्मृतिहेतुर्भावना आत्ममात्रवृत्तिः । अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः । इति गुणाः ।

( न्यायबो० ) संस्कारं विभजते—संस्कार इति । भावनां लक्षयति । अनुभवेति अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । अत्रानुभवजन्यत्वे सतीति विशेषणानुपादाने आत्ममनःसंयोगेऽतिव्याप्तिः । आत्ममनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वादतस्तदुपा-

दानम्। आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः। तावन्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः ध्वंसं प्रति प्रतियोगिनः कारणत्वेनानुभवध्वंसस्याप्यनुभवजन्यत्वादतः स्मृतिहेतुत्वोपादानम्। अनुभवध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिरिति। ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा। यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानं कारणम्। दण्डविशिष्टबुद्धिर्नाम दण्डप्रकारकबुद्धिः तथाच दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वमित्यापतितम्। दण्डप्रकारकबुद्धिः दण्डी पुरुष इत्याकारकबुद्धिस्तत्र दण्डज्ञानं कारणम्। नहि दण्डमजानानः पुमान् 'दण्डी पुरुषः' इति प्रत्येति। एवं च यत्रायं दण्ड इति प्रत्यक्षं जातं तदनन्तरं दण्डी पुरुष इत्याकारकप्रत्यक्षमुत्पन्नं तत्र दण्डी पुरुष इत्याकारकप्रत्यक्षेऽतिव्याप्तिः। तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं, जनिष्यमाणे दण्डी पुरुष इत्याकारकस्मरणे कारणं च-स्मृतिं प्रत्यनुभवस्य कारणत्वात्तथा चानुभवजन्यत्वे सति स्मृतिहेतुत्वरूपभावनालक्षणस्य यथोक्तदण्डी पुरुष इत्याकारकानुभवे विद्यमानत्वादतिव्याप्तिरिति चेत्। अत्र ब्रूमः—अनुभवजन्यत्वं हि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वम्। तत्र कारणतायामनुभवत्वावच्छिन्नत्वं निवेश्यते तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वमनुभवजन्यत्वमिति फलितम्, अतो नोक्तातिव्याप्तिस्तथा हि—दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपितदण्डज्ञाननिष्ठा या कारणतातस्या न दण्डानुभवत्वमवच्छेदकं दण्डा-

नुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धेरुत्पत्तेः, अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति अनुभवस्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात्। तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः। भावनायां तु लक्षणमिदं वर्तते। तथाहि—अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवस्यानुभवत्वेनैव कारणतया भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम्। अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वं भावानायां वर्तत इति नासंभवः। नन्वेवं स्मृतिहेतुत्वविशेषणवैयर्थ्यम्। तद्ध्यनुभवध्वंसेऽतिव्याप्तिवारणाय प्रागुपात्तम्। नहि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते। तथाहि—ध्वंसत्वावच्छिन्नं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण, तत्तद्ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः। तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता तस्यां प्रतियोगित्वमवच्छेदकं तत्तद्व्यक्तित्वं च, न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहेणैवातिव्याप्तिवारणसंभवात्कृतं स्मृतिहेतुत्वविशेषणेनेति चेत् न स्मृतावतिव्याप्तिवारणायैव तदुपादानात्। तथाहि—स्मृतिं प्रत्यनुभव एव कारणं न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कार-

णत्वं न तु घटज्ञानत्वेन, तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठा कारणता तस्यां घटानुभवत्वमवच्छेदकम् तेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिवारणाय स्मृतिहेतुत्वमुक्तम्। नहि स्मृतिः स्मृतिहेतुः । अतो न तत्रातिव्याप्तिरित्यलं पल्लविते ।

( पदकृ० ) संस्कारं विभजते—संस्कार इति । सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान् संस्कारः । घटादिवारणाय 'गुणत्वव्याप्य' इति । संयोगादिवारणाय आत्मविशेषगुणोभयवृत्तिः' इति, ज्ञानादिवारणाय 'सामान्यगुण' इति । द्वितीयादिपतन इति । कालादिवारणाय असमवायि इति । भावनां लक्षयति—अनुभवेति । आत्मादिवारणाय प्रथमदलम् । अनुभवध्वंसवारणाय द्वितीयदलम् । स्थितिस्थापकमाह—अन्यथेति । पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्त्वं स्थितिस्थापकत्वम् । गन्धत्वमादाय गन्धेऽतिव्याप्तिवारणाय 'संस्कारत्वव्याप्य' इति। भावनात्वमादाय भावनावारणाय 'पृथिवीसमवेत' इति । स्थितिस्थापकरूपान्यतरत्वमादाय रूपवारणाय 'जाति' इति । इति गुणाः । द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः । द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम् । सामान्यादावतिव्याप्तिवारणाय विशेष्यदलम् ।

( प्रतिबि० ) संस्कारत्वजातिमत्त्वं संस्कारलक्षणम् । स च वेगभावनास्थितिस्थापकभेदात् त्रिविधः । वेगत्वजातिमत्त्वं वेगलक्षणम् । स च पृथिव्यप्तेजोवायुमनोवृत्तिः । अनुभवजन्य-

त्वे सति स्मृतिहेतुत्वं भावनालक्षणम्। आत्ममनःसंयोगेऽनुभवध्वंसे चातिप्रसङ्गवारणाय क्रमेणानुभवजन्यत्वं स्मृतिहेतुत्वं च। भावना आत्ममात्रवृत्तिः। पृथिवीमात्रवृत्तिसंस्कारत्वव्याप्यजातिमत्त्वं स्थितिस्थापकलक्षणम्। कटादिरूपायां पृथिव्यां वर्तते।

कर्मणो लक्षणं प्रदर्शयति—

**चलनात्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम्। विप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत्सर्वं गमनम्।**

( न्यायबो० ) कर्म निरूपयति—चलनात्मकमिति।

( पदकृ० ) चलनेति। संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म। हस्तपुस्तकसंयोगवारणाय सत्यन्तम्। घटादिवारणाय विशेष्यदलम्। ऊर्ध्वेति। अपक्षेपणवारणाय 'ऊर्ध्व' इति कालादिवारणाय 'असाधारण' इत्यपि बोद्धव्यम्। अधोदेशेति। उत्क्षेपणवारणाय 'अधोदेश' इति। कालादिवारणाय 'असाधारण' इत्यपि देयम्। शरीरेति। प्रसारणादिवारणाय 'शरीरसन्निकृष्ट' इति। कालादिवारणाय असाधारणपदम् देयम्। विप्रकृष्टेति। उत्क्षेपणादिवारणाय 'विप्रकृष्ट' इति। कालादिवारणाय 'असाधारण' मावश्यकम्।

( प्रतिवि० ) चलनमात्मा रूपं यस्य तत्। कर्मलक्षणं तु संयोगभिन्नत्वविशिष्टसंयोगासमवायिकारणत्वम्। हस्तपुस्त-

कसंयोगवारणाय विशेषणभागः। पदार्थस्योर्ध्वप्रक्षेपाय हस्तादेरूर्ध्वदेशसंयोग उत्क्षेपणम्। हस्तादेरधोदेशसंयोग अपक्षेपणम्। शरीरस्य सन्निकर्षे सङ्कोचने हेतुराकुञ्चनम्। शरीरादेर्विप्रकर्षस्य विस्तारस्य हेतुः प्रसारणम्। उक्तकर्मभिन्नमन्यत्सर्वं भ्रमणस्वेदनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनादिकं गमनमेव।

सामान्यं निरूपयति—

**नित्यमेकमनेकानुगतं सामान्यम्। द्रव्यगुणकर्मवृत्ति। परं सत्ता अपरं द्रव्यत्वादि।**

( न्यायबो० ) सामान्यं निरूपयति–नित्यमेकमनेकानुगतमिति। नित्यत्वे सत्यनेकसमवेतत्वं जातेर्लक्षणम् इत्यर्थः। नित्यत्वविशेषणानुपादाने अनेकसमवेतत्वमात्रोपादाने संयोगादावतिव्याप्तिः तत्राप्यनेकसमवेतत्वस्य सत्त्वात्। अनेकसमवेतत्वानुपादाने नित्यत्वमात्रोपादाने आकाशादावतिव्याप्तिः तद्वारणाय अनेकसमवेतत्वम्। अनेकसमवेतत्वानुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात् समवेतत्वाच्च अतः अनेक इति समवेतविशेषणम्।

( पदकृ० ) नित्यमिति संयोगादिवारणाय 'नित्यम्, इति। कालादि परिमाणवारणाय 'अनेक,इति अनेकानुगतत्वं च समवायेन बोध्यम् तेन नात्यन्ताभावेऽतिव्याप्तिः।

( प्रतिबि० ) नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम्। संयोगादावतिव्याप्तिवारणाय नित्यत्वे सतीति। गगनपरिमा-

णादावतिव्याप्तिवारणायानेकेति। अत्यन्ताभाववारणाय समवेतेति। सामान्यं परापरभेदेन द्विविधम्। द्रव्यगुणकर्मरूपाधिकदेशवृत्तित्वात्सत्तापरं सामान्यम्। द्रव्यादिप्रत्येकवृत्तित्वेनाल्पदेशवृत्तित्वाद्द्रव्यत्वगुणत्वादिकमपरसामान्यम्। वस्तुतस्तु द्रव्यादिपरापरसामान्यं घटत्वाद्यपरसामान्यमिति ज्ञेयम्।

विशेषं प्रदर्शयति—

## नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः।

( न्यायबो० ) नित्यद्रव्यवृत्तय इति। नित्यद्रव्येषु परमाण्वादिषु वर्तमानः अतएव व्यावर्तका इतरभेदानुमितिहेतवः नित्यद्रव्यवृत्तित्वरूपपक्षधर्मताप्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः। नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः। पार्थिवपरमाणौ जलादिभेदानुमापकगन्धेति व्याप्तिवारणायैकमात्रवृत्तित्वं भेदविशेषणम्। घटादौ घटतदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय निरूपितान्तं प्रकारताविशेषणम्। एतेन व्यावर्तका इत्यस्य नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजिका इत्यर्थकतया लक्षणपरत्वेन साफल्येऽपि नित्यद्रव्यवृत्तय इति विफलमेव स्वरूपाख्यातस्यापि कृतत्वादिति प्रत्युक्तम्।

( पदकृ० ) नित्यद्रव्यवृत्तयं इति घटत्वादिवारणाय 'नित्यद्रव्यवृत्तिः' इति। आत्मत्वमनस्त्ववारणाय 'आत्मत्वमनस्त्वभिन्नत्वे सति' इत्यपि बोध्यम्।

( प्रतिबि० ) नित्यद्रव्यवृत्तिविशिष्टव्यावर्तकत्वं विशेषलक्षणम् ।

समवायं प्रदर्शयति—

**नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्द्वयोर्मध्ये एकमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथा अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति ।**

( न्यायबो० ) समवायं निरूपयति—नित्येति । सम्बन्धत्वविशिष्टप्रतीतिनियामकत्वम् । तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिः अतो 'नित्य' इति विशेषणम् । ययोर्मध्ये इति । यन्नियतकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः ।

( पदकृ० ) नित्येति । आकाशादिवारणाय 'सम्बन्ध' इति संयोगवारणाय 'नित्य' इति । स्वरूपसम्बन्धवारणाय 'तद्भिन्न' इत्यपि ।

( प्रतिबि० ) नित्यसम्बन्धत्वं समवायलक्षणम् । नित्यपदं संयोगवारणाय । सम्बन्धपदमाकाशादिवारणाय । समवायस्य वृत्तिश्चायुतसिद्धपदार्थे । अयुतौ अपृथग्भूतौ सन्तौ यौ सिद्धाविति व्युत्पत्त्या अपृथक्सिद्धत्वमयुतसिद्धलक्षणम् । ययोर्द्वयोः पदार्थयोर्मध्ये एकमविनाशं प्राप्नुवदन्याश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथावयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति । घटकपालयोरेकोघटोऽवि-

नश्यत्कपालाश्रित इवावतिष्ठत इति तावयुतसिद्धौ। एवं गुणगुण्यादिष्वपि योज्यम्।

प्रागभावं निरूपयति—

**अनादिः सान्तः प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य।**

( न्यायबो० ) प्रागभावं निरूपयति...अनादिरिति।

( पद्कृ० ) प्रागभावं लक्षयति—अनादिरिति। घटादिवारणाय प्रथमदलम्। परमाणुवारणाय द्वितीयदलम्। पुनः प्रागभावः कस्मिन् कालेऽस्ति। इत्यत आह—उत्पत्तेरिति। कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणे वर्तते इत्यर्थः।

( प्रतिबि० ) अनादित्वे सति सान्तत्वं प्रागभावलक्षणम्। सान्त इत्युच्यमाने घटादावतिव्याप्तिरत अनादित्वे सतीति। अनादिरित्युच्यमाने परमाणावव्याप्तिरतः सान्त इति। प्रागभावश्च कार्यस्य घटादेरुत्पत्तेः प्राक् अभावप्रतियोगिभूतघटसमवायिकारणे कपाले वर्तते। प्रागभावसिद्धाविह कपाले घटो भविष्यतीति प्रतीतिर्मानम्।

प्रध्वंसं निरूपयति—

**सादिरनन्तः प्रध्वंसः। उत्पत्त्यनन्तरं कार्यस्य।**

( न्यायबो० ) ध्वंसं निरूपयति—सादिरिति।

( पदकृ० ) ध्वंसं लक्षयति—सादिरिति । घटादिवारणाय 'अनन्त' इति । आत्मादिवारणाय 'सादि' इति । उत्पत्तीति । कार्यस्योत्पत्त्यनन्तर स्वप्रतियोगिसमवायिकारणवृत्तिरित्यर्थः, स च 'ध्वस्त' इति प्रत्ययविषयः ।

( प्रतिबि० ) सादित्वे सत्यनन्तत्वं प्रध्वंसलक्षणम् । सादिरित्युक्तौ घटादौ दोषोऽतोऽनन्त इति । अनन्त इत्युक्तावात्मनि दोषोऽतः सादिरिति । प्रध्वंसस्तु कार्यस्य घटादेरुत्पत्त्यनन्तरं ध्वंसप्रतियोगिघटसमवायिकारणे तिष्ठति । घटो ध्वस्त इति ज्ञानं ध्वंससिद्धौ मानम् ।

अत्यन्ताभावं निरूपयति—

**त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः । यथा 'भूतले घटो नास्ति' इति ।**

( न्यायबो० ) अत्यन्ताभावं निरूपयति—त्रैकालिकेति । प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणम् । ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथाक्रमे विशेषणोपादानम् । वस्तुतस्तु संसर्गाभावत्वं तादात्म्यभिन्नसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वं ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति यत्तेनैव तद्वारणे त्रैकालिकेति स्वरूपाख्यानमेवेति बोध्यम् ।

( पदकृ० ) अत्यन्ताभावं लक्षयति—त्रैकालिक इति । त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः, ध्वंसप्रागभाववारणाय 'त्रैकालिक, इति । भेदवारणाय 'संसर्ग' इत्यादि ।

( प्रतिबि० ) त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकत्वमत्यन्ताभावलक्षणम् । प्रागभावध्वंसयोरतिव्याप्तिवारणाय त्रैकालिक इति । भेदेऽतिव्याप्तिवारणाय संसर्ग इति । भूतले घटो नास्तीत्युदाहरणम् ।

अन्योन्याभावं निरूपयति—

**तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावोऽन्योन्याभावः । यथा 'घटः पटो न' इति ।**

( न्यायबो० ) अन्योन्याभावं निरूपयति तादात्म्येति । अभावत्रयवारणाय विशेषण घटाभाववान्नेति प्रतीतिविषयत्वं घटादिवारणाय विशेष्यम् ।

( पदकृ० ) अन्योन्याभावं लक्षयति-तादात्म्येति । प्रागभावप्रध्वंसाभाववारणाय 'तादात्म्य' इति । अत्यन्ताभाववारणाय तादात्म्यत्वेन तादात्म्यसम्बन्धो विशेषणीयः । संसर्गाभावभिन्नाभावत्वमन्योन्याभावलक्षणम् ।

पदार्थानुपसंहरति—

**सर्वेषामेवपदार्थानां यथायथमुक्त्वेष्तवान्तर्भावात् सप्तैव पदार्था इति सिद्धम् ।**

( न्यायबो० ) ननु सादृश्यादीनामतिरिक्तपदार्थानामनिरूपणेनान्यूनतेत्यत आह—सर्वेषामिति । प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति न्यायस्यादिमसूत्र उक्तानां 'प्रमाणप्रमेयादीनाम्' इत्यर्थः ।

इति श्रीमत्सर्वविद्वन्मुकुटश्रीगोवर्धनकृता तर्कसंग्रहव्याख्या न्यायबोधिनी समाप्ता ।

( पदकृ० ) पदार्थज्ञानस्य परमप्रयोजनं 'मोक्षः' इत्यामनन्ति । स च आत्यन्तिकैकविंशतिदुःखध्वंसः । आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । दुःखध्वंसस्येदानीमपि सत्त्वेनास्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् । मुक्त्यात्मकदुःखध्वंसस्यान्यदीयदुःखप्रागभावसमानकालीनत्वाद्वामदेवादीनां मुक्तात्मनामप्यमुक्तत्वप्रसंगात् 'स्वसमानाधिकरण' इति प्रागभावविशेषणम् दुःखानि चैकविंशतिः, शरीरम्, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुखं दुःखं, चेति । दुःखानुषङ्गित्वाच्च शरीरादौ गौणदुःखत्वम् । तथा च आत्मा वा रे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, इति श्रुतेरात्मज्ञानसाधननिदिध्यासनसाधनमतसाधनत्वं पदार्थज्ञाने संजाघटीति । एवं च सति तत्त्वज्ञाने शरीरपुत्रादावात्मत्वस्वीयत्वाभिमानरूपमिथ्याज्ञानस्य नाशः । तेन दोषाभावः तेन प्रवृत्त्यनुत्पत्तिः ततस्तत्कालीनशरीरेण कायव्यूहेन वा भोगतत्त्वज्ञानाभ्यां कर्मणां नाशः ततो जन्माभावः । यथा आह—

"नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥
अभ्यासात्पक्वविज्ञाने कैवल्यं लभते नरः ।"

इत्यादिवचनात् "तमेव विदित्वाऽतिमृत्युमेति" इति श्रुतेश्च सगुणोपासनाकाशीमरणादेरपि तत्त्वज्ञानद्वारा मुक्तिहेतुत्वम् । अत एव 'परमेश्वरः काश्यां तारकमुपदिशति,' इति सारम् ।

चक्रे चन्द्रजसिंहो हि पदकृत्यमिदं शुभम् ।
परोपकारकरणं मानवो वीक्षतां परम् ॥१॥

इति श्रीमत्तत्रभवद्गुरुदत्तसिंहशिष्यश्रीचन्द्रसिंहविरचितं पदकृत्यं समाप्तिमगात् ।

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानरूपाणां गौतमोक्तानां षोडशानामपि पदार्थानां सप्तपदार्थेष्वेवान्तर्भाव इति पदार्थाः सप्तैवेति प्रतिज्ञा सिद्धिः । तथाहि । प्रत्यक्षादिप्रमाणानां द्रव्ये गुणे वान्तर्भावः। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गात्मकद्वादशप्रमेयस्य यथायोग्यं द्रव्ये गुणे चान्तर्भावः । प्रयोजनस्य यथायोग्यं द्रव्ये गुणे वान्तर्भावः। दृष्टान्तस्य द्रव्ये । सिद्धान्तस्य द्रव्ये । अवयवतर्कनिर्णयवादजल्पवितण्डानां गुणे । हेत्वाभासानां द्रव्ये । छलजात्योर्गुणे । निग्रहस्थानानां यथायोग्यं द्रव्यादावन्तर्भावः । पदार्थतत्त्वज्ञानस्य मोक्षः फलम् । मोक्षश्चात्यन्तिकैकविंशतिदुःखनिवृत्तिः ।

दुःखानि चैकविंशतिः शरीरे षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखदुःखे च। पदार्थतत्त्वज्ञाने जाते आत्मसाक्षात्कारहेतुश्रवणमनननिदिध्यासनज्ञानम्। ततो मिथ्याज्ञाननिवृत्तिः। ततो दोषाभावः। ततः प्रवृत्त्यनुत्पत्तिः। ततो भोगतत्त्वज्ञानाभ्यां कर्मनाशः। ततो जन्माभाव इति शम्।

काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये।
अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः॥ १॥

इति श्रीमहामहोपाध्यायान्नंभट्टविरचितः
तर्कसंग्रहः समाप्तः।

काशीवास्तव्येन श्री पं० जगन्नाथव्याससूनुना 'विद्यारत्न'
पं० माधवप्रसादव्यासेन परिष्कृत्य संशोधितः।



पुस्तक मिलने का पता—
भार्गव पुस्तकालय,
गायघाट, बनारस सिटी।

बाबू काशीप्रसादभार्गव द्वारा—भार्गवभूषण प्रेस, काशी में मुद्रित

...ला–
...झोली
...तीसरा
...मिलेगा? और इसका आधार क्या होगा?

2–भारतीय क्रिकेट टीम के चयन पर आपकी क्या प्रतिक्रिया है?

इस बातचीत में अधिकांश लोगों ने वेस्टइंडीज को "रिलायंस" कप का संभावित उत्तराधिकारी बताया। किन्तु दूसरे स्थान पर भारत–पाक के दावेदारी को लेकर काफी मतभेद रही। अधिकांश लोगों का मत

आंकड़...
...लड़ा भ...
...य टीम की...
और पैनापन...
उलट सकती...
की पेस बै...
मिलने की पू...
दूसरी तरफ...
बल्लेबाजी...
विजय में ब...
तीसरे. स्थानों...
गुटों में बं...
भारत, पाक...
अपने–अपने–अ...
क्रम निर्धारित...
इसी प्र...
के चयन मे...
संतुष्ट दिखा...
लोगों का सु...
खिलाड़ियों...

## तीसरे विश्वकप के झरोखे...

# भारत-आस्ट्रेलिया की भिड़न्त में भारत...

| | | | | | | |
|---|---|---|---|---|---|---|
| [illegible] | [illegible] | [illegible] | 55 | 1488 | 31-65 | 2 |
| असंन्था [illegible] मेल | 09-05-59 | 13-02-82 | 53 | 466 | 15-53 | – |
| रमेश र[illegible]नायक | 02-01-64 | 26-09-82 | 42 | 298 | 15-68 | – |
| अर्जुन रानातुन्गा | 01-12-63 | 14-02-82 | 49 | 1007 | 26-50 | – |
| अरविन्द डे सिल्वा | 17-10-65 | 03-11-84 | 35 | 690 | 23-00 | |
| श्रीधरान जगन्नाथन | 11-07-51 | 20-03-83 | 1 | – | – | |
| रंजन मदुगले | 22-04-59 | 16-06-79 | 45 | 708 | 2[illegible] | |
| जे. रविन्द्रन रतनायक | 02-05-60 | 12-03-82 | 41 | 379 | | |
| विनोथन जॉन | 27-05-60 | 12-09-82 | 39 | 7[illegible] | | |
| आशांका गुरूसिंह | 16-09-66 | 03-11-85 | 13 | 34[illegible] | | |
| [illegible] कुरूप्पू | 05-01-62 | 30-4-83 | 22 | 393 | | |
| [illegible] महानामा | 31-05-66 | 02-03-86 | 12 | 254 | | |

# ...ओं की निगाह में...

...के अनुसार पाक ...री है किन्तु भार- ...गेंदबाजी में थोड़ा ...आ जायें तो स्थिति ...है। एक तरफ पाक ...टरी को सफलता ...री आशा है तो ...भारत की ठोस ...त हार को ... में सक्षम है। ...लिए लोगतीन ...गये। ये लोग ...एवं इंग्लैण्ड को ...धार पर यह ...र रहे हैं। ...भारतीयटीम ...अधिकतर लोग ...पड़े। लेकिनकुछ ...था कि नये ...रिस्क लेकर



मौका देना चाहिए। वाराणसी के क्षेत्रीय क्रीड़ा अधिकारी श्री नित्य गोपाल भट्टाचार्या का मानना है कि "रिलायंस कप" इस बार "वेस्टइंडीज" के कब्जे में होगा जबकि पाक को दूसरा तथा इंग्लैण्ड या भारत को तीसरा स्थान मिलेगा। उनके अनुसार वेस्टइंडीज की पेस बैटरी को विजय का पूर्ण श्रेय मिलेगा। हालांकि पिचें मध्यम तेजगति एवं स्पिनर्स को सहायता देने के उद्देश्य से बनाई गई हैं। इसके बावजूद विव रिचर्डस अपने साथियों के साथ किसी भी गेंदबाज का हौसला पस्त ...ने में सक्षम है। कई प्रमुख

भारत अपने ग्रुप (भारत, आ...

— प्रस्तुतकर्ता—...

...लिया, न्यूजीलैण्ड एवं जिम्बा... में शीर्ष पर पहुंच सकता... हेडली के न रहने का ... फायदा भारत उठायेगा। भा... तीय टीम की बल्लेबाजी का ... सुदृढ़ है और ९ वें क्रम ... वें रन बना सकते हैं ... मध्यम तेज गति के गेंदब... की सफलता पर सब ... निर्भर है। दूसरी तरफ ... की पेस बैटरी में इस ... काफी पैनापन है। इसकेअल... जावेद मियाँदाद, मुद्दस्सर ... इमरान जैसे अनुभवी बल्ले... कभी भी पासा पलट सकने...

## ...पहली ...राजित

...मने हौसले बुलन्दी ...च हार चुकी थी, ...ान, यू ज ने टास ...० ओवर ६ विकेट ...रत के सामने प्रस्तुत ...भारतीय खिलाड़ी ...गराते गये. १६२

## लंका एकादश का

...ाम ... कैरियर गैप रन औसत शतक अर्धशतक